॥ श्रीः ॥

लघुच्छन्दोऽलंकारदर्पणापरनामा

# देवीस्तवः ।

योधपुरवास्तव्येन दाधीच-कासल्योपाख्यधीरधुरीणमाधवकवीन्द्रनन्दनेन आशुकविना पण्डित-
**नित्यानन्दशास्त्रिणा विरचितः ।**

तेनैव च निर्मितया

**नित्यानन्दिकाख्यव्याख्यया,**

ग्रन्थकारज्येष्ठसोदरेण विद्याभूषणेन पण्डित-**श्रीभगवतीलालशर्मणा** कृतया

**तात्पर्यदर्शिन्या भाषाटीकया च विभूषितः ।**

स च

**खेमराज-श्रीकृष्णदासश्रेष्ठिना**

**मुम्बय्यां**

( खेतवाडी ७ वीं गली खम्बाटा लैन )

स्वकीये "श्रीवेङ्कटेश्वर" स्टीम्-मुद्रणयन्त्रालये

मुद्रयित्वा प्रकाशितः ।

संवत् १९६९, शके १८३४.

॥ श्रीः ॥

# प्रस्तावना ।

श्रीमन्तं गजतुण्डं सुन्दरसिन्दूरबिन्दुशुभशुण्डम् ।
वन्दे सुरुन्दतुन्दं स्वदन्तशुचिकान्तकान्तिजितकुन्दम् ॥ १ ॥
मरालाध्यासिता मञ्जुक्वणत्कच्छपिकाऽमला ।
सरस्वतीव हृदि मे संगताऽस्तु सरस्वती ॥ २ ॥

सक्ता रजः--प्रकटसत्त्व-रजःसु विश्व-
विश्वप्ररोप-परिगोप-विलोपशक्ताः ।
तापत्रयीहरणकर्मजुषोऽत्र लोके
लोकेशकेशवशिवाः शिवमावहन्तु ॥ ३ ॥

यत्क्षेत्रजाता जगतीतले जना
गच्छन्त्यमी दाधिमथाभिधेयताम् ।
देवस्तुता श्रीदधिमथ्यसंशयं
सोपासकानां विजयं सदा क्रियात् ॥ ४ ॥

विदितमेवात्र खलु श्रुतपारदृश्वानां तत्रभवतां धीरधुरन्धराणाम्, यदुत समधिरोहति शास्त्रमुकुटालंकारपदवीं सरससुन्दरसन्दर्भगर्भवचनामृतरसास्वादनेन कविवरवदनालंकारभूतं चतुर्वर्गफलसाधनसाधनीभूतमलंकारशास्त्रम्। न चान्तरा छन्दःशास्त्रज्ञानमवगाढुमर्हति, तद् यः कोऽपि संजातशब्दशास्त्रपाटवोऽपि पाठकजनः। एतदेवोद्दिश्य निबन्धनं निबबन्धिरे नाना निबन्धा यथायथं तयोरुभयोरपि

शास्त्रयोर्गहनशास्त्रमहोदधिमन्थनप्रवीणैर्धीरधुरीणैः । तत्रालंकारनिबन्धसिन्धुसंतरणार्थमुडुपमिव निरमायि परमार्हतेन श्रीमता **वाग्भटेन** वाग्भटालंकाराभिधानमलङ्कारशास्त्रं सरलतरम् । छन्दोग्रन्थशिखरिशिखरारोहणार्थं चारोहणमिव व्यररचत्कविकुलचूडालंकारः **कालिदासः** श्रुतबोधनामानं सुबोधं छन्दःसंदर्भम् । एतदुभयद्वारेण यथा लब्धुं प्रभवति तत्तच्छास्त्रमहामन्दिरप्रवेशं जनो, न तथाऽन्येन । परं सत्यपि तत्रतत्र तत्तल्लक्षणोदाहरणक्रमे, ग्रन्थान्तराऽन्तःपातिपद्योदाहरणसंघटनं विना कालान्तरे न हि स्मरणसरणिमारोहन्ति च्छात्रवर्गस्यालंकाराश्छन्दांसि चेत्यपि नह्यविज्ञातं वरीवर्ति विज्ञवराणाम् । सत्सु महानिबन्धेषु संघटयमानेष्वपि च तत्रतत्रोदाहरणेषु क्रमादर्शनेन पुनःपुनरनुशीलनासंभवाद्विना भूयांसं प्रयासं न खलु हृदयकषपदमवगाहन्ते तत्तच्छास्त्रं प्रविविक्षूणां सुतरां तत्तद्विषयाः । इत्याकलय्य व्यचिन्तयं चेतसि, यदुत कस्या अपि देवतायाः स्तवमुद्दिश्य तथा मयैको लघुरेव ग्रन्थो ग्रन्थनीयः यत्र हि दर्पण इव वाग्भटालंकारीया अलंकाराः श्रुतबोधीयानि च्छन्दांसि च समं दृश्येरन् । येन देवतास्तवपठनेन फलप्राप्तिश्छन्दोऽलंकारविज्ञत्वं चेत्युभयमपि सिद्ध्येत् । इत्थं विचारयत एव मम कियानपि जगामावसानं काललवः । अथ यथाकालं श्रुतजनवर्ण्यमानातनुप्रभावो दर्शनोत्कलिकया भृशं प्रेर्यमाणो गत्वा योधपुरतो नागपुरमतिक्रम्य च ततः पञ्चषगव्यूतिप्रमितमध्वानं गोष्ठमंगलोदग्रामयोरन्तरालवनभूमिं पुनानां भगवतीं सुरासुरवन्द्यचरणतलां दधिमथीं देवीमपश्यम् । दृष्ट्वा च तां प्रमोदमानमानसो व्यलोकयं देवीप्रभावेणाश्चर्यकारीणि ह्रदकूपस्तम्भादीनि मन्दिरगतान्यासेचनकवस्तूनि । तत्प्रभावचित्रीयितचेताश्च प्रतिज्ञातत्वान्पूर्वोक्तरूपं देवीस्तवं निर्मातुम् । अकरवं च तत्प्रसादादेनं **लघुच्छन्दोऽलंकारदर्पण**पराभिधानं तदुद्देशेन निबन्धम् । तत्र च प्रतिपद्यं पूर्वमलंकारस्य ततश्छन्दसो नामाऽपि युक्त्याऽसूचयम् । तत्तच्छन्दोऽलंकारसंघटनपुर-

---

१ अस्या देव्याः प्रभावप्रादुर्भावादिकं तु लवपुरीयप्राच्यविद्यालय ( Orienta Callege ) प्रधानाध्यापक महामहोपाध्याय पं. श्रीशिवदत्तशास्त्रीभी रच्यमाने दधिमथनवनीतनाम्नि निबन्धे, योधपुरस्थ–दाधिमथ-महासभातः प्रकाश्यमाने दधिमथीनाम्नि पत्रे वा द्रष्टव्यम् ।

स्सरं च स्वकृतया **नित्यानन्दिका**भिधानया व्याख्ययाऽमुं समयोजयम् । हिन्दी-**भाषाटीकां** पुनरत्र मदीयज्येष्ठसोदरा गुरवः संशोधनपुरस्सरं सर्वजनसुबोधाय व्यरचयन्निति तेभ्यः सहस्रशो धन्यवादाः समर्प्यन्ते तदुपकारं बहु मन्यमानेन मया प्रकाशनाय ससर्वाधिकारं चैनं समार्पयं परमवैष्णवेभ्यो **मुम्बईस्थश्रीवेङ्कटेश्वर**-यन्त्रालयाध्यक्षेभ्यः **श्रीकृष्णदास** श्रेष्ठिसूनुभ्यः **श्रीक्षेमराजा**भिधेयेभ्यः श्रेष्ठिभ्यः एतेपि स्वकीये "श्रीवेङ्कटेश्वर" यन्त्रालये मुद्रयित्वा प्रकाशितवन्त इति । महीयांसं धन्यवादमर्हन्ति वेदमहापुराणाद्यलभ्यनिबन्धोद्धारकास्त इति ।

"गच्छतःस्खलनं क्वाऽपि भवत्येव प्रमादतः" इति वचनाद्यथामति संशोधितेऽप्यत्र निबन्धे यत्र कुत्रचनाशुद्धिः कृता जाता वा स्यात्, तत्र करुणावरुणालयैः सहृदयैः संशोधनीयमिति प्रणामपुरःसरं सविनयकृताञ्जलिरहं प्रार्थये ।

सत्कृपाभिलाषी-

**नित्यानन्दशर्मा,**

॥ श्रीदेव्यै नमः ॥

एतद्ग्रन्थ उदाहरणरूपेण दर्शितानामलंकाराणां छन्दसां च नामानि यथासंख्यं दर्श्यन्ते—

| श्लोकानां तेषां च संख्या. | अलंकारनामानि. | छन्दोनामानि. |
| --- | --- | --- |
| १ | चित्रम् | आर्या |
| २ | वक्रोक्तिः | गीतिः |
| ३ | अनुप्रासः | उपगीतिः |
| ४ | यमकम् | अक्षरपंक्तिः |
| ५ | जातिः | शशिवदना |
| ६ | उपमा | मदलेखा |
| ७ | रूपकम् | श्लोकः |
| ८ | प्रतिवस्तूपमा | पद्यम् |
| ९ | भ्रान्तिमान् | माणवकाक्रीडम् |
| १० | आक्षेपः | नगस्वरूपिणी |
| ११ | संशयः | विद्युन्माला |
| १२ | दृष्टान्तः | चम्पकमाला |
| १३ | व्यतिरेकः | मणिबन्धः |

| श्लोकानां तेषां च संख्या. | अलंकारनामानि. | छन्दोनामानि. |
|---|---|---|
| १४ | अपह्नुतिः | हंसी |
| १५ | तुल्ययोगिता | शालिनी |
| १६ | उत्प्रेक्षा | दोधकम् |
| १७ | अर्थान्तरन्यासः | इन्द्रवज्रा |
| १८ | समासोक्तिः | उपेन्द्रवज्रा |
| १९ | विभावना | उपजातिः |
| २० | दीपकम् | ( विपरीता )ऽऽख्यानकी |
| २१ | अतिशयः | रथोद्धता |
| २२ | हेतुः | स्वागता |
| २३ | पर्यायोक्तिः | वैश्वदेवी |
| २४ | समाहितम् | तोटकम् |
| २५ | परिवृत्तिः | भुजङ्गप्रयातम् |
| २६ | यथासंख्यम् | द्रुतविलम्बितम् |
| २७ | विषमम् | प्रमिताक्षरा |
| २८ | सहोक्तिः | हरिणीप्लुता |
| २९ | विरोधः | वंशस्थम् |
| ३० | अवसरः | इन्द्रवंशा |
| ३१ | सारम् | प्रभावती |
| ३२ | श्लेषः | प्रहर्षिणी |
| ३३ | समुच्चयः | वसन्ततिलकम् |
| ३४ | अप्रस्तुतप्रशंसा | मालिनी |
| ३५ | एकावली | हरिणी |
| ३६ | अनुमानम् | शिखरिणी |
| ३७ | परिसंख्या | पृथ्वी |
| ३८ | प्रश्नोत्तरम् | मन्दाक्रान्ता |
| ३९ | संकरः | शार्दूलविक्रीडितम् |
| ४० | | स्रग्धरा |

# देवीस्तव-प्रथमपद्यस्य च्छत्रबन्ध-चित्रम् ।

श्रीशः शरणम् ।

अथाऽऽशुकविपण्डितनित्यानन्दशास्त्रिरचितो

# देवीस्तवः ।

## संस्कृतटीका–भाषाटीकासहितः ।

**जयजय वार्या दधिमथि !, जन्माऽन्तामेलनं हृदुन्माथि ।**
**आवालचित्रतनुभा, आर्यानव्यास्तथाऽम्बाभा ॥ १ ॥**

( छत्रबन्धचित्रम् )

नित्यानन्दो देवीं नत्वा स्वगुरुं च भगवतीलालम् ।
कुरुते स्वकृत उमास्तव इह नित्यानन्दिकां टीकाम् ॥ १ ॥

सं०टी० ॥ जयेति ॥ आवालं केशपर्यन्तं चित्रा (अपूर्वरूपशालित्वात्) आश्चर्यकारिणी तनोः शरीरस्य भाः कान्तिर्यस्याः सा तयोक्ता, तत्सम्बुद्धौ आवालचित्रतनुभाः ! दधिमथि ! हे देवि ! त्वं जय जय, अतिशयेन जयवती भवेत्यर्थः । तथा समुच्चये । त्वं हृदुन्माथि मनोव्यथकम्, जन्मान्तौ जन्ममरणे तयोरामेलनं सम्बन्धस्तं, वार्याः दूरीक्रियाः । अस्माकं जन्ममरणराहित्यं कुर्विति भावः । तथा अम्बाभा मातृसदृशी त्वमिति शेषः । आर्यान् भक्तान्, अव्याः पालय । अत्र पद्ये प्रारम्भे जयशब्दप्रयोगेण कविना मंगलं सूचितमित्यर्थः ॥

अत्र पदिकोभयपार्श्वस्थिताभ्यां 'ज, थि' इति वर्णाभ्यां; दण्डोपरिस्थ 'आ' इत्यक्षरेण; पदिकामूलभागस्थित 'वा, र्या' इति वर्णाभ्यां; दण्डपदिकामध्यवर्त्ति 'ल, नं' इत्यक्षराभ्यां; दण्डाऽधःस्थित'भा'इत्यक्षरेण च अङ्गसन्धौ संजाते सति छत्ररूपवस्तुकल्पनायाः सत्त्वात्प्रसत्तेश्च संभवाच्चित्रालंकारः । उक्तं च तल्लक्षणं श्रीमता कविवरेण वाग्भटेन स्वकृते वाग्भटालंकारग्रन्थे ''यत्राङ्गसंधिस्तद्रूपैरक्षरैर्वस्तुकल्पना । सत्यां प्रसत्तौ तच्चित्रं, तच्चित्रं चित्रकृच्च यत्'' इति । स च चित्रा-

लंकार 'आबालचित्रतनुभा' अत्र 'चित्र' इति पदसूचनेन युक्त्या दर्शितः; अत एव तस्य स्थूलत्वेन न्यासो मूले दर्शितः ॥

अपि चात्र प्रथमपादे द्वादशमात्राणां, द्वितीये चाष्टादशमात्राणां, तृतीये पुनर्द्वादशमात्राणां, चतुर्थे च पादे पञ्चदशमात्राणां सत्त्वादार्यावृत्तं ज्ञेयम् । तल्लक्षणं तूक्तं महाकविना श्रीकालिदासेन स्वविरचिते श्रुतवोधनाम्नि निवन्धे-"यस्याः पादे प्रथमे द्वादशमात्रास्तथा तृतीयेऽपि । अष्टादश द्वितीये, चतुर्थके पञ्चदश सार्या" इति । तच्चार्यावृत्तं 'आर्यानन्या' इह 'आर्या' इति प्रयोगेण सूचितम् । अत एव तस्य स्थूलत्वेन न्यासः । एवमग्रेऽपि पूर्वोक्ततत्तत्कविकृततत्तद्ग्रन्थोक्तान्येवाऽलंकाराणां छन्दसां च लक्षणानि वक्ष्यन्ते । अनयैव च रीत्या मूले सर्वत्र स्थूलाक्षरसंकेतितौ वृत्तालंकारौ द्रष्टव्यौ । न च "कतरोऽलंकारसूचकः ? कतरश्च शब्दो वृत्तसूचकः ? स्थूलत्वसाम्येन न सम्यङ्निश्चयः स्यात्" इति शंकनीयम्, सर्वत्र हि पद्येषु पूर्वमलंकारसूचकस्य ततश्च वृत्तसूचकस्य शब्दस्य नियतत्वादिति ॥ १ ॥

नत्वा भगवतीलालो माधवं, गिरिजास्तवे ।
कुरुते सुखबोधाय भाषां तात्पर्यदर्शिनीम् ॥ १ ॥

भा० टी० ॥ हे विचित्रकांतिवाली ! देवी दधिमथी ! जय हो, जय हो । तू हमारे मनको दुःख देनेवाले जन्ममरणके संबंधको दूरकर और माताके जैसे भक्तोंकी रक्षा कर ॥ १ ॥

**कस्त्वं गुहातमसि रे ! सुरोऽस्मि, देवोऽसि नो, सदनुजोऽहम् ।**
**अनुजः सत इति वक्रो-क्तिसुभागी तिरितवान्स्वमम्ब ! रिपुः २॥**

सं० टी० ॥ क इति ॥ भयात्स्वसेनया सह गहान्धकारं प्रविष्टस्य दैत्यस्य, देवसेनया सह तमनु मारणाय प्रस्थितायाश्च देव्या उक्तिप्रत्युक्ती—रे ! अरे ! गुहातमसि गिरिगुहान्धकारे त्वं कः ? इति देवीप्रश्नः । असुरोऽस्मि दैत्योऽस्मि, इति सयुक्ति दैत्यस्योत्तरम् । अथ 'रेऽसुरोऽस्मि' अत्र पूर्व-पूर्वरूप-रूपसंध्यननुशीलनेन 'सुरोऽस्मि देवोऽस्मि' इत्यर्थं ज्ञातवती देवी पुनराह—देवोऽसि, त्रिदशोऽसि ? किमिति शेषः । नो, न; अहं स ( विकटास्यः ) दनुजः दैत्यः, अस्मीति शेषः।

१ देवादिकं मत्वा मां न मारयेत् इति स्वरक्षणार्थं युक्त्या दैत्यस्योत्तरं ज्ञेयम् ।

इति पुनर्दैत्यस्योत्तरम्। अथ 'सतः अनुजः' इत्यर्थं ज्ञातवती भगवती पुनराह । सतः अनुजः ? किमसीति शेषः । इति इत्थं रीत्या वक्रां कुटिलाम् अर्थान्तराभासिनीमिति यावत्, उक्तिं वचनं सुभजति सेवते तथोक्तो रिपुः, शत्रुः, तत्रेति शेषः । हे अम्ब ! देवि ! स्वमात्मानं तिरितवान् गोपितवान्, त्वदिति शेषः । इत्यर्थः ॥

इह दैत्यरूपस्याऽन्यस्य वस्तुनः'असुरोऽस्मि–दैत्योऽस्मि' इत्याद्यन्यार्थकं वाक्यं 'सुरोऽस्मि, देवोऽस्मि' इत्याद्यन्यथा भंगश्लेषेण देवी योजितवतीत्यतो वक्रोक्त्यलंकारः । तल्लक्षणं तु–"अन्यस्याऽन्यार्थकं वाक्यमन्यथा योजयेद्यदि । भंगश्लेषेण काका वा सा वक्रोक्तिरियं द्विधा" इति ॥

अथ चात्र आर्याप्रथमदलस्येव त्रिंशन्मात्रात्मकस्य द्वितीयस्यापि दलस्य प्रयुक्ततया गीतिवृत्तम् । तल्लक्षणं तु "आर्याप्रथमदलोक्तं द्वितीयमपि भवति यत्र हंसगते ! । छन्दोविदस्तदानीं गीतिंताममृतवाणि ! भाषन्ते" इति ॥ २ ॥

भा०टी०॥ इस श्लोकमें डरसे पर्वत–गुहामें भगे हुए दैत्यकी और उसको मारनेको पीछे गई हुई देवीकी उक्ति प्रत्युक्ति है–देवीने कहा, 'अरे ! इस गुफाके अन्धकारमें कौन है ?' उसने कहा, 'मैं ऽसुरहूं'; देवीने कहा, क्या देव है ?; उसने कहा, नहीं; मैं स दनुज ( वही दैत्य ) हूं; देवीने कहा; क्या सत् ( सज्जन ) का छोटा भाई ? ऐसे हे देवी ! कुटिल उक्ति करके शत्रुने तेरेसे अपनी आत्माको छुपाई ॥ २ ॥

**दनुतनुजमनु प्रासं, प्रासंप्रासं स्मिताऽम्बाऽव्यात् ।**
**उपगीतिगीतिगीताऽ–गणितगुणैर्गुणिगणैर्गुणिता ॥ ३ ॥**

सं०टी०॥ दन्विति ॥ उपगीतय उपगानानि गीतयो गानानि तैः ( करणैः) गीता उत्कीर्तिता अगणिता असंख्याता गुणा यैस्तथाभूता ये गुणिगणाः पंडितसमूहास्तैः गुणिता स्तुता, तथा दनुजतनुजो दानवो विकटास्यनामा, तमनु तत्पृष्ठत इति भावः । प्रासं कुन्तं प्रासं प्रासं क्षिप्त्वा क्षिप्त्वा, "आभीक्ष्ण्ये णमुल्" इति णमुल् । स्मिता ईषद् हसिता ( सती ) "गत्यर्थाकर्मक०" इत्यादिना कर्तरिक्तः । अम्बा देवी अव्यात् पायादित्यर्थः ॥

---

१ । 'मुझे सुर जानकर छोड़देवे' इस विचारसे दैत्यने आधाही अकार कहा

अत्र पूर्वार्धे तुल्यश्रुतीनां 'दनु तनु मनु' इत्याद्यक्षराणाम्, उत्तरार्द्धे च पूर्वं गकारतकारयोस्ततो गकारणकारयोश्चावृत्त्या कांतिगुणस्फुरणेन चाऽनुप्रासोऽलंकारः। तत्र 'दनु तनु मनु' इत्यादौ अतत्पदतया छेकानुप्रासः;'प्रासं प्रासं'इत्यादौ च तत्पदावृत्त्या लाटानुप्रासः। तल्लक्षणं तु "तुल्यश्रुत्यक्षरा वृत्तिरनुप्रासः स्फुरद्गुणः। अतत्पदः स्याच्छेकानां लाटानां तत्पदश्च सः" इति ॥

अपि चात्र प्रथमार्द्धस्याऽपि आर्योत्तरार्द्धवत् ( सप्तविंशतिमात्रान्विततया ) प्रयुक्तत्वादुपगीतिवृत्तम्। तल्लक्षणं तु "आर्योत्तरार्धतुल्यं प्रथमार्धमपि प्रयुक्तं चेत्। कामिनि! तामुपगीतिं प्रतिभाषन्ते महाकवयः" इति ॥ ३ ॥

भा०टी०॥ गीत और उपगीतोंसे गुण गानेवाले भक्तोंसे स्तुति कीगई, और अपने शत्रु दैत्यके पिछाड़ी भालेको फैंक २ कर कुछ मुसकराती हुई वो देवी रक्षा करो ॥ ३ ॥

**द्येद् यमकष्टं, शस्तपदाऽर्या।**
**साऽक्षरपंक्ति–शस्तपदाऽऽर्या ॥ ४ ॥**

सं०टी०॥द्येदिति॥ शस्तं कल्याणं 'कुशलं क्षेममस्त्रियाम्। शस्तं च' इत्यमरः। तदेव पदं स्थानं यस्याः सा, आर्या स्वामिनी, तथा साक्षराणां पंडितानां पंक्त्या शस्ते स्तुते पदे चरणौ यस्याः सा तथाभूता, आर्या देवी; यमकष्टं यमकृतां पीडां, द्येत् खंडयत्वित्यर्थः। द्येदिति दोधातोर्विधिलिङि रूपम्। 'ओतः श्यनि' इति ओलोपः ॥

अत्र द्वितीयपादस्य चतुर्थपादे भिन्नार्थतयाऽऽवृत्तेः सत्त्वाद् यमकमलंकारः। तल्लक्षणं—"स्यात्पादपदवर्णनामावृत्तिः संयुताऽयुता। यमकं भिन्नवाच्यानामादिमध्यान्तगोचरम्" इति।

किञ्चाऽत्र प्रतिपादं[1] आद्यचतुर्थपञ्चमवर्णानां गुरुत्वात्तदन्ययोश्च द्वितीयतृतीययोरक्षरयोर्लघुतया अक्षरपंक्तिवृत्तम्। तल्लक्षणं "आद्यचतुर्थं, पञ्चमकं चेत्। यत्र गुरु स्यात्, साऽक्षरपंक्तिः॥" इति ॥ ४ ॥

भा०टी० ॥ कल्याणोंकी स्थान, स्वामिनी और जिसके चरण पंडितोंसे स्तुति किये गये हैं वो देवी यमराजकी पीडाको दूर करो ॥ ४ ॥

---

१ एवं सर्वत्र प्रतिपादं ज्ञेयम्।

**करधृतशूलाऽ-वतु गिरिजाति ।**
**हरिमधिरूढा शशिवदना सा ॥ ५ ॥**

सं०टी० ॥ करेति ॥ करेण पाणिना धृतं धारितं शूलं यया सा, हरिं सिंहमधिरूढाऽध्यासिता । "हरिर्विष्णावहाविन्द्रे भेके सिंहे हये रवौ । चन्द्रे कीले प्लवङ्गे च यमे वाते च कीर्त्तितः" इति नानार्थकोशः । तया शशिवच्चन्द्रवद्वदनं मुखं यस्याः सा तथोक्ता, सा प्रस्तुता गिरिजा देवी, अति अतिशयेन, अवतु रक्षतु । इत्यर्थः॥

इह अक्रियस्य देवीरूपस्य पदार्थस्य शूलधारण-सिंहारोहणादिरूपेण स्वभावस्योक्तेर्जातिरलंकारः । तल्लक्षणं तु "स्वभावोक्तिः पदार्थस्य सक्रियस्याऽक्रियस्य वा । जातिर्विशेषैतो रम्या हीने तत्रार्भकादिषु ॥" इति ॥

अपि चात्र पूर्वतश्चतुर्णामक्षराणां लघुतया, ततो द्वयोर्गुरुतया शशिवदनावृत्तं ज्ञेयम् । तल्लक्षणं " अगुरु चतुष्कं भवति गुरू द्वौ । घनकुचयुग्मे शशिवदनाऽसौ ॥ " इति ॥ ५ ॥

भा० टी० ॥ हाथमें शूलको धारण करनेवाली, सिंहपर बैठी हुई, चन्द्रके समान मुखवाली, वो देवी अत्यन्त रक्षा करो ॥ ५ ॥

**भास्वद्भा उपमा या; हन्ति ध्वान्तवदेनः ।**
**सा मातेव सपुत्राऽ-म्बाऽव्यात् सोन्मदलेखा ॥ ६ ॥**

सं०टी०॥ भास्वदिति ॥ भास्वतः सूर्यस्य भाः कान्तिः सा एव उपमोपमानं 'यस्याः' सा तथोक्ता । सूर्यकान्तिसदृशीत्यर्थः । 'सदृक्षः सदृशः सदृक् । निभसंकाशनीकाशप्रतीकाशोपमादयः' इति कोशः । या ( देवी ) ध्वान्तवदन्धकारमिव एनः पापं हन्ति नाशयति । सा, सपुत्रा तनयान्विता मातेव जननीव सोन्मदलेखा प्रमुदितदेवसहिता 'लेखा अदितिनन्दनाः' इत्यमरः । अम्बा देवी, अव्यात्पायादित्यर्थः ॥

अत्र पूर्वार्द्धे देवीरूपोपमेयस्य सूर्यकान्तिरूपेणोपमानेन; पापरूपोपमेयस्य च ध्वान्तरूपेणोपमानेन; उत्तरार्धे च देवसहितदेवीरूपोपमेयस्य पुत्रसहितमातृरूपोपमानेन सादृश्यदर्शनादुपमालंकारः । स चाऽत्र तुल्यार्थान्वयदर्शितो

---

१ अत्र 'विशेषतः' इति कथनं नियमाभावं दर्शयति अत एव केचिदेवं नोचुः ।

ज्ञेयः । तल्लक्षणं तु "उपमानेन सादृश्यमुपमेयस्य यत्र सा । प्रत्ययाव्ययतुल्यार्थसमासैरुपमा मता ॥ " इति ॥

अथ चात्र चतुर्थ-पञ्चमानां वर्णानां प्रतिपादं लघुत्वात्तदन्येषां गुरुतया च मदलेखावृत्तम् । तल्लक्षणं तु " तुर्यं पञ्चमकं चेद्, यत्र स्याल्लघु बाले ! । विद्भिर्मृगनेत्रे !, प्रोक्ता सा मदलेखा " इति ॥ ६ ॥

भा०टी० ॥ जो ( देवी ) सूर्यके कान्तिके जैसी, अन्धकारके जैसे पापको दूर करती है; पुत्रसहित माताके जैसी, हर्षित देवों सहित वो देवी रक्षा करो ॥ ६ ॥

**नाभ्यावर्त्तां सुदङ्मीनां, कपोलपुलिनां शुभाम् ।**
**रूपकामीश्वरीगङ्गां तामुपश्लोकयेऽमलाम् ॥ ७ ॥**

सं०टी० ॥ नाभीति ॥ नाभिरेवावर्त्तो जलभ्रमो यस्याः सा तथोक्ता तां, सुशोभनौ दृशावेव मीनौ यस्याः ( स्यां ) सा तथाभूता तां, कपोल एव पुलिनं यस्याः सा तथोक्ता ताम्, रूपं लावण्यमेव कं जलं यत्र सा तथाभूता ताम्, " मारुते वेधसि व्रध्ने पुंसि कः कं शिरोऽम्बुनोः " इत्यमरः । शुभां कल्याणकारिणीं मनोज्ञां वाऽमलां निर्मलां ताम्, ईश्वरी देवी सैव ( पावनतया ) गंगा भागीरथी ताम्; उपश्लोकये श्लोकैरुपस्तुवे वर्णये इति भावः । "सत्यापपाश०" इति णिच् । इत्यर्थः ॥

अत्र गांभीर्यादिसाधर्म्यान्नाभ्यावर्त्तयोः वेत्रमीनयोः, कपोलपुलिनयोः, रूपजलयोः, तदङ्गि देवीगङ्गयोश्चाभेददर्शनाद्रूपकमलंकारः । तच्च रूपकं 'नाभ्यावर्त्ता' इत्यादिरूपेण समासदर्शनात्समस्तं, देवीगङ्गयोश्च तदङ्गभूतनाभ्यावर्त्तादिरूपेण खण्डतया वर्णनात्खण्डं च ज्ञेयम् । तल्लक्षणं "रूपकं यत्र साधर्म्यादर्थयोरभिदा भवेत् । समस्तं वाऽसमस्तं वा, खण्डं वाऽखण्डमेव वा" इति ॥

अपि चात्र सर्वत्र पादेषु षष्ठस्य वर्णस्य गुरुत्वात्पञ्चमस्य च लघुत्वाद्, द्वितीयचतुर्थपादयोश्च सप्तमवर्णस्य ह्रस्वत्वात्तदन्ययोश्च प्रथमतृतीयपादयोः सप्तमवर्णस्य दीर्घतया श्लोकवृत्तं ज्ञेयम् । तल्लक्षणं तु "श्लोके षष्ठं गुरु ज्ञेयं, सर्वत्र लघु पंचमम् । द्विचतुःपादयोर्ह्रस्वं, सप्तमं दीर्घमन्ययोः ॥" इति ॥ ७ ॥

भा०टी० ॥ नाभिरूप आवर्तवाली, अच्छे नेत्ररूप मत्स्यवाली, कपोलरूप पुलिनवाली, लावण्यरूप जलवाली, मनोहर, निर्मल उस देवीरूप गङ्गाकी स्तुति करता हूं ॥ ७ ॥

**भ्रमन्त्यपि मनःस्फूर्तिः प्रतिवस्तूपमात्रियात् ।**
**षट्पद्यपास्य नलिनीं द्रुपत्त्राणि भजेत किम् ? ॥ ८॥**

सं० टी० ॥भ्रमन्तीति ॥ वस्तु वस्तु प्रतीति प्रतिवस्तु, प्रत्येकं वस्तु इति भावः। भ्रमन्ती गच्छन्त्यपि मनःस्फूर्त्तिश्चित्तवृत्तिः, उपमातृ, माता अम्बा देवीति यावत्, तस्याः समीपमुपमातृ इयात् गच्छेत्, आश्रयेदिति भावः । अत्र विधौ संभावनायां वा लिङ् । एतदेव प्रतिवस्तूपमिमीते उत्तरार्द्धेन--षडिति किं षट्पदी भ्रमरी, नलिनीं कमलिनीम्, अपास्य विहाय, द्रुपत्त्राणि तरुदलानि, भजेत आश्रयेत ? न कदापीति भावः । एवमेव मनोवृत्तिर्देवीमपहाय किमन्यानि वस्तून्याश्रयेत् ? न कदापीति भावः । इत्यर्थः ॥

इह साम्यवाचकानामिवादीनामनुपात्तौ सत्याम्, अन्यवस्त्वनादरपुरःसरं देवीसमीपाश्रयणोद्यतस्य मनःस्फूर्त्तिरूपस्य वस्तुनः वृक्षपत्त्रानादरपूर्वकं कमलिन्याश्रयणोद्यतेन भ्रमरीरूपेण प्रतिवस्तुना साम्यं प्रतीयतेऽतः प्रतिवस्तूपमालङ्कारः । तल्लक्षणं तु "अनुपात्ताविवादीनां, वस्तुनः प्रतिवस्तुना । यत्र प्रतीयते साम्यं, प्रतिवस्तूपमा तु सा ॥ " इति ॥

किञ्चाऽत्र चतुर्षु पादेषु पञ्चमवर्णस्य लघुत्वात्, द्वितीयचतुर्थपादयोश्च सप्तमस्य लघुत्वात्षष्ठस्य च गुरुत्वात्पद्यनाम वृत्तम् । तल्लक्षणं " पञ्चमं लघु सर्वत्र, सप्तमं द्विचतुर्थयोः । षष्ठं गुरु विजानीयादेतत्पद्यस्य लक्षणम् ॥ " इति । अत्र 'षष्ठं गुरु विजानीयात्' इत्यस्य 'द्विचतुर्थयोः' इत्यनेन सहैवान्वयः कार्यः । केचित्तु 'षष्ठं गुरु सर्वत्र' इति व्याचख्युः, तन्न; एवं कृते श्लोक-पद्ययोरैक्यापत्तेर्दर्शनात् । अत एव मूले तृतीयपादे 'नलिनी' इत्यत्र षष्ठस्य नकारस्य लघुत्वदर्शनादनयोर्भेदः स्फुटतया सूचितः ॥ ८ ॥

भा०टी०॥ प्रत्येक वस्तुओंमें भ्रमण करतीहुई भी चित्तकी वृत्ति, आशा है कि देवीके पास जावे। अर्थात् देवीका आश्रय ले । क्या भ्रमरी कमलिनीको

छोड़कर वृक्षके पत्तोंमें बैठे ? अर्थात् कभी नहीं। ऐसे चित्तवृत्ति भी देवीको ही शरण लेवै ॥ ८ ॥

**भ्रान्तिमतामुत्तम ! यद्, वेत्सि शिवां जातिलताम् ।**
**साध्विह तत् स्वं हृदलि–माणवकाक्रीडय भोः ॥ ९ ॥**

सं० टी० ॥ भ्रान्तीति ॥ भो भ्रान्तिमतां भ्रमणशीलानामुत्तम ! श्रेष्ठ ! हृदेव मन एव अलिमाणवकः भ्रमरबालस्तत्संबुद्धौ हे हृदलिमाणवक ! "बालस्तु स्यान्माणवकः" इत्यमरः । इह माणवकशब्देन मुग्धत्वबाहुल्यं प्रकटितम् । यत्त्वं शिवां देवीं, जातिलतां माधवीलतां, ( गौरतया ) वेत्सि जानासि, तत् साधु शोभनम् । तत्तव लाभकारकमिति भावः । इह अस्यां देवीरूपायां जातिलतायां, स्वम् आत्मानमाक्रीडय रमय । तत्र निरतो भवेत्यर्थः ॥

अत्र अन्यच्च देवीरूपवस्तुनि तत्तुल्यस्याऽन्यस्य जातिलतारूपस्य वस्तुनो मनोभ्रमरबालकृतो निश्चयो जायतेऽतो भ्रान्तिमदलंकारः । तल्लक्षणं "वस्तुन्यन्यत्र कुत्राऽपि, तत्तुल्यस्यान्यवस्तुनः । निश्चयो यत्र जायेत, भ्रान्तिमान् स स्मृतो यथा ॥" इति ॥

अथ चात्र प्रथम–चतुर्थ–पञ्चमान्तिमवर्णानां गुरुतया शेषाणां च लघुतया माणवकाक्रीडाख्यं वृत्तम् । तल्लक्षणं "आदिगतं तुर्यगतं, पञ्चमकं चान्त्यगतम् । स्याद्गुरु चेत्तत्कथितं, माणवकाक्रीडमिदम् ॥" इति ॥ ९ ॥

भा०टी० ॥ हे भ्रमण करनेवालोंमें श्रेष्ठ ! भ्रमर–बालक ! जो कि तू इस देवीको ( गौरपनसे ) चँवेरी लता जानता है । वो ठीक है । तू इस देवीरूप चँवेरीमें खूब क्रीडा कर ॥ ९ ॥

**अभीष्टदाऽऽगआक्षिपा महेश्वरी यदि स्थिता ॥**
**तदा नगस्वरूपिणी वृथाऽस्ति कल्पवल्लिका ॥ १० ॥**

सं०टी०॥ अभीति ॥ यदि चेत्, अभीष्टदा वाञ्छितार्थदायिनी, तथा आक्षिपतीति आक्षिपा, आगसां पापानामपराधानां वाऽऽक्षिपा नाशिकेति आगआक्षिपा पापनाशिनीत्यर्थः । महेश्वरी देवी स्थिता विराजिता, अस्तीति शेषः । तदा, न गच्छतीति नगः 'नगोऽप्राणिषु' इति नञः प्रकृतिवद्भावः । स नग एव स्वस्या-

त्मनो रूपमस्या अस्तीति नगस्वरूपिणी वृक्षाकृतिरित्यर्थः । कल्पवल्लिका कल्पलता वृथा व्यर्थम् अस्ति वर्त्तते । अभीष्टदायां पापनाशिन्यां च देव्यां सत्यां न किमपि कल्पलतायाः प्रयोजनमिति भावः । इत्यर्थः ॥

अत्र महेश्वरीसद्भावेन कल्पवल्लीरूपवस्तुनः प्रतिषेधस्योक्तत्वादाक्षेपालंकारः । तल्लक्षणं तु " उक्तिर्यत्र प्रतीतिर्वा, प्रतिषेधस्य जायते । आचक्षते तमाक्षेपा–ऽलंकारं विबुधा यथा ॥ " इति । अत्र आक्षेपोऽलंकारः 'आगआक्षिपा' इति आक्षिपाशब्देन कथं सूचितः ? इति न शंकनीयम. अस्मिन्वृत्ते आक्षेपशब्द–स्यागमनाऽसंभवेन तद्वाचकस्य ' आक्षिपा'शब्दस्यैव युक्त्या वर्णितत्वादिति ॥

अपि चाऽत्र द्वितीय--चतुर्थ–षष्ठाष्टमानां वर्णानां प्रतिपादं गुरुत्वादन्येषां च लघुत्वेन नगस्वरूपिणी [illegible]म् । तल्लक्षणं तु "द्वितुर्यषष्ठमष्टमं, गुरु प्रयोजितं यदा । तदा निवेदयन्ति तां, बुधा नगस्वरूपिणीम् ॥ " इति ॥ १० ॥

भा० टी० ॥ यदि मनोवांछित पूरण करनेवाली, और पापका नाश करने-वाली देवी विराजमान है तो, जडस्वरूपवाली यह कल्पलता वृथा है ॥१०॥

**दुर्गे ! प्रोयद्भासं देहं, दृष्ट्वा ते ज्ञा इत्यूहन्ते ।**
**विद्युन्माला किं वार्की भा, नेहौष्म्यं[1] त्वा देव्या मूर्तिः॥ ११ ॥**

सं० टी० ॥ दुर्गे इति ॥ हे दुर्गे ! देवि ! ज्ञाः पण्डिताः, ते तव, प्रोद्यती उच्छलन्ती भाः कान्तिर्यस्मात्तथाभूतस्तं देहं दृष्ट्वा वीक्ष्य, इति वक्ष्यमाणप्रकारेण ऊहन्ते तर्कयन्ति । कथमित्याह–किं विद्युन्माला तडिदावली ? वाऽथवा आर्की सूर्यसंबन्धिनी भाः कान्तिः ? तु परन्तु, इह दृश्यमाने वस्तुनि औष्म्यम् उष्णता न वर्त्तत इति शेषः । त्वाः ज्ञातम् । देव्या दधिमथ्याः मूर्त्तिस्तनूः वर्त्तत इति शेषः । इत्यर्थः ॥

इह प्रसरत्कान्तेर्देवीदेहस्य विद्युन्मालादिना साम्यात् किमेतदिति रीत्या संदेह-प्रतीतेः संशया–( संदेहा ) लंकारः । स च विद्युन्मालादौ संदेहे जाते, उष्णत्वा-भावहेतुना च तद्भङ्गे देव्या मूर्त्तिरिति निश्चयेन निश्चयान्तो ज्ञेयः । तल्लक्षणं– "इदमेतदिदं वेति साम्याद् बुद्धिर्हि संशयः । हेतुभिर्निश्चयः सोऽपि निश्चयान्तः

१ 'ष्ण्यमू' इत्यपि पाठः ।

स्मृतो यथा'' इति । ननु वाग्भटालङ्कारे तु ''आक्षेपोऽथ संशयः'' इति संशय-नाम्नाऽयमलंकारो निर्दिष्टः, मूले च 'भासं देहं' इति संदेहनाम्ना कथं सूचितः? इति नैव शंक्यम्; अवश्यरचनीयविद्युन्मालाच्छन्दसा विरचितेऽत्र सर्वदीर्घवर्णे पद्ये 'संशय' इति पदस्य कथमप्यागमनशक्तेरसंभवात्, संदेहनाम्नाऽपि च तस्य महाकविश्रीविश्वनाथादिभिः संमतत्वात्तथा कृते न दोषः ॥

अथ चात्र सर्वेषां वर्णानां दीर्घत्वात्, चतुर्भिश्चतुर्भिश्च विश्रामसम्भवेन विद्युन्मालावृत्तम् । तल्लक्षणं तु ''सर्वे वर्णा दीर्घा यस्यां, विश्रामः स्याद्वेदैर्वेदैः । विद्वद्वृन्दैर्वीणावाणि ! व्याख्याता सा विद्युन्माला ॥'' इति ॥ ११ ॥

भा० टी० ॥ हे देवि ! पंडित लोग, परिपूर्ण कान्तिवाली आपकी मूर्तिको देखकर ऐसी शंका करतेहैं । क्या यह विजुलियोंकी पंक्ति है ? वा सूर्यकी कान्ति है ? परन्तु इसमें ताप नहींहै । इसही लिये, आ ! जाना, यह देवीकी मूर्ति है ॥ ११ ॥

**भूषणदृष्टां तत्त्विन इष्टां**
**वीक्ष्य तनुं ते देवि ! भजन्ते ।**
**चंपकमालां सत्कुसुमजालां**
**प्राप्य ससंगाः स्युर्नहि भृङ्गाः ? ॥ १२ ॥**

सं० टी० ॥ भूषणेति ॥ हे देवि ! दधिमथि ! तत्त्विनस्तत्त्वान्वेषिणः, भूषणैराभरणैर्दृष्टां विलोकितां यद्वा, दृष्टानि भूषणानि यत्र सा, ताम् । 'वाहिताग्न्यादिषु' इति वचनाद्भूषणस्य प्राक् प्रयोगः । अत एव इष्टां प्रियां, ते तव, तनुं मूर्तिं, वीक्ष्य दृष्ट्वा, भजन्ते सेवन्ते । न तु तां वीक्ष्याऽन्यत्र व्यापृता भवंतीति भावः । एतदेव दृष्टांतयति उत्तरार्द्धेन–भृङ्गा भ्रमराः । सत्कुसुमजालां विद्यमानकुसुमप्रकरां, चम्पकमालां हैमपुष्पकावलीं, प्राप्य लब्ध्वा, ससङ्गा मेल-सहितास्तन्निलीना इति भावः । नहि न स्युर्भवेयुः । किमिति शेषः । अपि तु स्युरेव । यथा सुपुष्पितां चंपकमालां प्राप्य भ्रमरा अन्यत्र न गच्छन्ति, तथैव देवीं दृष्ट्वा तत्त्वान्वेष्टारोऽन्यत्र न गच्छंति, किंतु सेवंत एवेति भावः । इत्यर्थः ॥

अत्र भूषणभूषितदेवीमूर्तिदर्शनपूर्वक-पण्डितकृततद्भजनरूपस्य स्वस्य वस्तुनः, तथा पुष्पजालविशिष्टचम्पकमाला-प्राप्तिपूर्वक-भ्रमरकृततदासक्तिरूपस्याऽन्यवस्तुना क्रिययाऽन्वयख्यापनं वर्त्तेतेऽतो दृष्टान्तालङ्कारः। तल्लक्षणं तु "अन्वयख्यापनं यत्र क्रियया स्वतदन्ययोः तं दृष्टान्तमिति प्राहुरलङ्कारं मनीषिणः ॥" इति ॥

अथ चात्र प्रथम-चतुर्थ-पञ्चम-षष्ठानां, अन्त्योपान्त्ययो ( नवमदशमयो ) श्च गुरुत्वाच्छेषाणां च लघुत्वात्, पञ्चभिः पञ्चभिश्च विरामाच्चम्पकमालावृत्तम्। तल्लक्षणं " तन्वि ! गुरु स्यादाद्यचतुर्थं पञ्चमषष्ठं चान्त्यमुपान्त्यम्। इन्द्रियबाणैर्यत्र विरामः, सा कथनीया चम्पकमाला ॥ " इति ॥ १२ ॥

भा० टी० ॥ हे देवी ! भूषणयुक्त, नेत्रप्रिय, तेरी मूर्त्तिको विद्वान् लोक देखकर सेवन करने लगजाते हैं; क्या भँवरे पुष्पसहित चम्पकोंकी पंक्तिको पाकर उसमें लीन न हों ? अर्थात् होवें ही ॥ १२ ॥

**दीव्यति रे कः स, द्युलता--**
**भां य उ मां तां वर्णयति।**
**सद्गमनेयं, सा तु गति--**
**कर्मणि बन्धं धारयति ॥ १३ ॥**

सं० टी० ॥ दीव्यतीति ॥ रे ! अरे ! स कः दीव्यति शोभते, यः तां तादृशाऽपूर्ववैभवाम्, उमां देवीं, द्युलताभां ( इष्टदत्वेन ) कल्पलतासदृशीं वर्णयति प्रकथयति। एतदनौचित्यमुत्तरार्द्धेन दर्शयति-इयं देवी सद्गमना विद्यमानगतिका, सा कल्पलता तु गतिकर्मणि चलनादिक्रियायां बन्धं रोधं (अभावं) धारयति धरति। एषा हिं सद्गतितया चलात्मिका, सा तु जडप्रकृतिः; तत्कथं तस्या देव्यास्तया कल्पलतया सहोपमोचितेत्यर्थः ॥

अत्रेष्टफलदत्वेन संसिद्धसाम्ययोर्द्युलतादेवीरूपयोरुपमानोपमेययोरेकतरस्मिन्नुपमेये सद्गमनतयाऽऽधिक्यवर्णनाद् व्यतिरेकालंकारः। तल्लक्षणं " केनचिद्यत्र धर्मेण, द्वयोः संसिद्धसाम्ययोः ॥ भवत्येकतराधिक्यं, व्यतिरेकः स उच्यते ॥ " इति ॥

अपि च पूर्वोक्तस्य चम्पकमालालक्षणस्यान्त्याक्षररहितत्वेनात्र संक्रमणान्मणिबन्धं वृत्तम् । तल्लक्षणं तु " चम्पकमाला यत्र भवेदन्त्यविहीना प्रेमनिवे । छन्दसि दक्षा ये कवयस्तं, मणिबन्धं ते ब्रुवते ॥ " इति ॥ १३ ॥

भा०टी० ॥ अरे ! ऐसा वो कौन है ? जो कि देवीको कल्पताके जैसे वर्णन करता है । क्योंकि देवी तो चलन क्रिया सहित है, और वह कल्पलता तो जड है । अत एव देवीका कल्पलताके साथ सादृश्य कभी नहीं घटता ॥१३॥

चैत्यं नाऽपह्नुति तव शिवे !
मूर्त्तं हंसीशुचि यश इदम् ।
द्यां च व्यंक्तुं शिखरकलश-
व्याजाद्बाह्वंगुलिमुदसते ॥ १४ ॥

सं० टी० ॥ चैत्यमिति ॥ हे शिवे ! देवि ! दयिमथि ! अपगता ह्नुतिर्गोपनं यस्य तदपह्नुति प्रकटमिति भावः । तव ते, इदमेतत् चैत्यं मन्दिरं न, वर्त्तत इति शेषः । ( किंतु ) इदं, हंसी मराली तद्वच्छुचि शुक्लं तव मूर्त्तं मूर्तिमत् यशः कीर्त्तिरस्तीति शेषः । अत्र ' इदं, तव ' एतौ शब्दौ देहलीदीपकन्यायेनोभयान्वयिनौ । च पुनः, द्यां स्वर्गं, व्यंक्तुं प्रकटयितुं, लोकेभ्य इति शेषः । शिखरस्य यः कलशः कनकमयमण्डकं तस्य व्याजान्मिषाद्, बाहोर्भुजस्यांऽगुलिं, उदसते उपादत्ते उन्नमयतीति भावः । ' उदसते ' इति रूपं भौवादिकस्य 'अस गतिदीप्त्यादानेषु' इत्यस्य लटि ते रूपम् । इत्यर्थः ॥

अत्र ' इदं चैत्यं न, किन्तु मूर्त्तिमद् यशः ' इत्यादिरीत्या चैत्याद्यपह्नवपूर्वकं यश आदिस्यापनं कृतमतोऽपह्नुतिरलंकारः । इयमेव व्याजादिशब्दोपलक्षिताऽपि भवतीत्युत्तरार्धे । तथापि प्रकटितम् । तल्लक्षणं तु " नैतदेतदिदं ह्येतदित्यपह्नवपूर्वकम् । उच्यते यत्र सादृश्यादपह्नुतिरियं यथा ॥" इति ॥

किञ्चेह वक्ष्यमाण-सप्तदशाक्षरात्मक-मंदाक्रान्तावृत्तलक्षणस्य सप्तवर्णात्मकान्तिमयति-रहितत्वेन, पूर्वयोश्चतुः-षडक्षरात्मकयोर्यत्योर्दर्शनाद् हंसीवृत्तम् । तल्ल-

---

१ पुरुषापेक्ष्या स्त्रिय उज्ज्वलत्वाधिक्यं भवति, अत एव हंसीति स्त्रीत्वनिर्देशः ।

क्षणं यथा "मन्दाक्रान्ताऽन्त्ययतिरहिता, सालंकारे! यदि भवति या। सा विद्वद्भिर्ध्रुवमभिहिता, ज्ञेया हंसी कमलवदने॥" इति!॥१४॥

भा० टी०॥ हे देवी दधिमथी! यह आपका मन्दिर नहीं है, किन्तु, यह आपका मूर्तिमत् यश है। और वह यश, शिखरके कलशके मिपसे, स्वर्गको लोकोंके लिये बतानेको भुजकी अंगुलीको ऊँची कर रहा है। अर्थात् 'इस देवीके भक्तोंके लिये वह स्वर्ग तैयार है' ऐसे बता रहा है॥ १४॥

**पूज्ये! दुर्गे!ऽतुल्ययोगित्वभाज-**
**स्त्वद्भक्तस्याऽपूर्वशोभा प्रवृत्तिः।**
**नैश्चल्यश्रीशालिनी गूढतत्त्व-**
**मीष्टे लब्धुं, सा तथा दिव्यदृष्टिः॥ १५॥**

सं० टी०॥ पूज्ये इति॥ हे पूज्ये! पूजनीये! दुर्गे! देवि! योगश्चित्तवृत्तिनिरोधः, सोऽस्यास्तीति योगी, तद्भावस्तत्त्वम्, अतुल्यम् असदृशं यद्योगित्वं योगवत्त्वं तद्भजति तथोक्तस्य। "भजो ण्विः" इति ण्विः। परिपूर्णयोगासक्तस्येति भावः। त्वद्भक्तस्य त्वदीय-सेवकस्य, अपूर्वा लोकोत्तरा शोभा यस्यास्तयाभूता, (तथा) निश्चलस्य भावो नैश्चल्यं स्थैर्यमिति भावः। तस्य श्रीः शोभा, तया शालिनी शोभिनी। निश्चलेति भावः। प्रवृत्तिः कार्यव्यापृतिः कर्मसाधनचेष्टेति भावः। गूढं गुप्तं यत्तत्त्वं तत्, लब्धुं प्राप्तुम्, ईष्टे शक्नोति, तथा पुनः सा प्रसिद्धा दिव्यदृष्टिः, दिवि भवा दिव्या या दृष्टिर्दर्शनम्। दिव्यदृष्टिरपि अपूर्वशोभा, अनिमेषतया निश्चला च भवति। साऽपि गुप्तं तत्त्वं यत्किमपि, अधिगन्तुं शक्नोत्येव। अत्र योगद्वारा देव्या दुर्ज्ञेयताप्रदर्शनेन 'दुर्गे' इति साकूतमित्यर्थः॥

अत्र योगिप्रवृत्तिरूपमुपमेयं समीकर्त्तुं तत्त्वप्राप्तिशक्तिरूपया तुल्यया, एक (वर्त्तमान) कालिक्या च क्रियया दिव्यदृष्टिरूपेणोपमानेन योज्यतेऽतस्तुल्ययोगितालंकारः। तल्लक्षणं तु 'उपमेयं समीकर्त्तुमुपमाने तु योज्यते। तुल्यैककालक्रियया यत्र सा तुल्ययोगिता॥" इति॥

अपि चात्र षष्ठ-नवमयोरक्षरयोर्लघुतयाऽन्येषां च गुरुतया, चतुर्भिः सप्तभिश्च वर्णैर्विश्रामसम्भवाच्छालिनीवृत्तम् । तल्लक्षणं "ह्रस्वो वर्णो जायते यत्र षष्ठः, कम्बुग्रीवे ! तद्वदेवाष्टमाऽन्त्यः । विश्रामः स्यात्तन्वि ! वेदैस्तुरंगैस्तां भाषन्ते शालिनीं छान्दसीयाः ॥" इति ॥ १९ ॥

भा० टी० ॥ हे पूज्या देवी ! पूर्णयोगको धारण करनेवाले आपके भक्तकी अपूर्व शोभावाली निश्चल चेष्टा, और दिव्यदृष्टि गुप्ततत्त्वको पा सक्ती है। अर्थात् गुप्ततत्त्व या तो आपका योगी भक्त पा सक्ता है; या दिव्यदृष्टि॥१५॥

त्वन्मुखवैरकृदिन्दुमृगं नू—
त्प्रेक्षणमक्षमयेव निहन्तुम् ।
उच्छलितं तव वाहहरिं हेऽ—
दोऽधक आनतिवर्त्म नयेऽम्ब ! ॥ १६ ॥

सं० टी० ॥ त्वदिति ॥ हे अम्ब ! मातः ! दधिमथि, नु वितर्के । तव मुखेन वैरं विरोधं करोति तथाभूतो य इन्दुश्चन्द्रस्तस्य मृगम् अङ्कहरिणम्, अक्षमया क्रोधेन, निहन्तुं मारयितुमिव, उदूर्द्ध्वं प्रेक्षणं यत्र कर्मणि तत्तथा, उच्छलितं उत्कूर्दनं प्राप्तं, तव ते, वाहहरिं वाहनभूतं सिंहं, अदः इदं ( आनतिवर्त्मविशेषणमिदम् ) अधकः नीचैः, " अव्ययसर्वनाम्नाम् " इत्यादिनाऽकच् । आनतिवर्त्म नमनपदवीं, नये आरोपयामि । नमामीति भावः । इत्यर्थः ॥

अत्र सिंहोच्छलितरूपस्य सतः स्वाभाविकस्यार्थस्याऽन्यथा चन्द्रहरिणहननफलकतया योग्यकल्पनायाः सत्त्वादुत्प्रेक्षाऽलंकारः । स चेवशब्देनाऽत्र दर्शितः । तल्लक्षणं तु " कल्पना काचिदौचित्याद्यत्रार्थस्य सतोऽन्यथा । द्योतिते वादिभिः शब्दैरुत्प्रेक्षा सा स्मृता यथा ॥ " इति ॥

किञ्चात्र प्रथम—चतुर्थ—सप्तम—दशमैकादशानामक्षराणां गुरुत्वेनाऽन्येषां च लघुत्वेन विरचनाद्दोधकवृत्तम् । तल्लक्षणं तु " आद्यचतुर्थमहीनमितम्बे !, सप्त-

---

१ अर्थशब्देनोपलक्षणात् क्रियाऽपि ग्राह्या तेन क्रियोत्प्रेक्षाऽपि ज्ञेया । इदमेव द्योतियंतु मूले तथैवोत्प्रेक्षितम् ।

मकं दशमं च तथाऽन्त्यम् । यत्र गुरु प्रकटस्मरसारे, तत्कथितं ननु दोधक-वृत्तम् ॥ " इति ॥ १६ ॥

भा० टी० ॥ हे देवी ! आपके मुखके साथ वैर करनेवाले चन्द्रमाके हरिणको मारनेको ही मानों उछलते हुए, ऊंची दृष्टिवाले आपके वाहन सिंहको यह मैं नीचा होकर प्रणाम करता हूं ॥ १६ ॥

अर्थान्तरन्याऽसमयुक्तिभाज--
स्त्वत्पाठतः सद्वच इन्द्रवज्राः ।
दुर्गे ! बुधा वादिगिरीञ्जयन्ति
दुर्गाश्रितानां विजयो ह्यधीनः ॥ १७ ॥

सं० टी० ॥ अर्थेति ॥ हे दुर्गे ! देवि ! त्वत्पाठतस्तव पाठाद्, दुर्गासप्तशतीपाठादिति भावः । अर्थानामभिधेयानामन्तर्मध्येऽन्याऽपरासमाऽसदृशी या युक्तिस्तां भजन्ते तथाभूताः । अर्थगतान्यसुयुक्तिविद इति भावः । अर्थेषु मध्येऽन्यामपि युक्तिं ये विदन्ति त इति तात्पर्यम् । सतो विदुष आचार्यस्येति भावः । वचो वचनमेवेन्द्रस्य वज्रं येषां तथोक्ताः, बुधा विद्वांसः वादिगिरीन् शास्त्रार्थ-प्रतिपक्षिरूपपर्वतान्, जयन्त्यभिभवन्ति । अत्राऽर्थान्तरेण पूर्वोक्तं दृढयति—हि यतः, दुर्गाश्रितानां देवीप्रपन्नानां दुर्गमाश्रितानां च पुरुषाणां विजयोऽधीनो वश्यः । अस्तीति भावः । यो दुर्गां दुर्गं चाश्रयति स जयत्येवेति भावः । इत्यर्थः ॥

अत्र दुर्गापाठहेतुकस्य वादिविजयरूपस्यार्थस्य सिद्ध्यर्थं चतुर्थपदोक्तस्यान्यार्थस्य न्यासेनाऽर्थान्तरन्यासालंकारः । स चात्र दुर्गाश्रितशब्दस्य द्व्यर्थतया श्लिष्टो ज्ञेयः । तल्लक्षणं तु " उक्तसिद्ध्यर्थमन्यार्थ-न्यासो व्याप्तिपुरःसरः । कथ्यतेऽर्थान्तरन्यासः, श्लिष्टोऽश्लिष्टश्च स द्विधा ॥ " इति ॥

अपि च तृतीय-षष्ठ-सप्तम-नवमाक्षराणां ह्रस्वतयाऽन्येषां च गुरुतया रचनेनेन्द्रवज्रावृत्तम् । तल्लक्षणं तु "यस्यां त्रिषट्सप्तममक्षरं चेद्ध्रस्वं सुजंघे नवमं

१ सा च युक्तिः "उत्थाय च महासिंहम्" इत्यादिवदर्थान्तराश्रयणेन ज्ञेया, विस्तरभयान्न टीकिता ।

च तद्वत् । गत्या विलज्जीकृतहंसकान्ते !, तामिन्द्रवज्रां ब्रुवते कवीन्द्राः ॥', इति ॥ १७ ॥

भा०टी०॥हे देवी! आपके पाठसे अर्थात् सप्तशतीपाठसे, अर्थोंके बीचमें अन्य २ अपूर्व युक्तिको जाननेवाले, पूर्वाचार्यरूप इन्द्रके वचन रूपवज्रवाले विद्वान् लोक वादिरूप पर्वतोंको जीतलेते हैं। हां ठीक है, दुर्गा देवी और दुर्ग किलेके को आश्रय करनेवालेके विजय (जीत) अधीन होती ही है। अर्थात् जैसे राजाओंके किला मजबूत रहता है, और समयपर उसका आश्रयकर जय पाते हैं, वैसेही दुर्गाके आश्रयसे जय मिलताहै ॥ १७ ॥

**मनः ! समासोक्तिरिति ब्रुवे त्वा-**
**मितस्ततो मा भ्रम आश्रयाऽम्बाम् ।**
**श्रयन्ति यां नाभिज-कृत्तिवास-**
**उपेन्द्र-वज्रायुधमुख्यदेवाः ॥ १८ ॥**

सं० टी० ॥ मन इति ॥ हे मनः ! हृदय ! समासेन संक्षेपेण उक्तिर्वचनं यस्य तादृशोऽहमिति शेषः । इति वक्ष्यमाणप्रकारेण त्वां, ब्रुवे कथयामि । त्वमितस्ततः मा भ्रमः, भ्रमणं मा कुरु । भ्रमेर्दैवादिकस्य लुङि रूपम् । पुषादित्वादङ् । " न माङ्योगे " इत्यडभावः । अम्बां देवीं, अम्बाशब्देन जगदुत्पादिका शक्तिः सूचिता । आश्रय सेवस्व । यां ( देवीं ) नाभिजो ब्रह्मा, कृत्तिवासाः शिवः, उपेन्द्रो विष्णुः, वज्रायुध इन्द्र इत्येते मुख्या आदयो येषां ते तथोक्ता ये देवाः श्रयन्ति सेवन्ते । इत्यर्थः ॥

अत्र 'हे मनुष्य ! यां महात्मानः श्रयन्ति, तां साधुपदवीं त्वमपि श्रय; इतस्ततः कुमार्गेषु मा भ्रम । ' इति वक्तुमिष्टस्यार्थस्य प्रतीतये मनः प्रति ब्रह्मादिश्रितदेवीसमाश्रयणोपदेशरूपं सधर्ममन्यद्वस्तूक्तमतः समासोक्तिरलंकारः । तल्लक्षणं " उच्यते वक्तुमिष्टस्य, प्रतीतिजनने क्षमम् । सधर्मं यत्र वस्त्वन्यत्समासोक्तिरियं यथा ॥ " इति ॥

किञ्चात्र पादेष्वाद्यानां वर्णानां लघुत्वेन तदन्येषां चेन्द्रवज्रानुसारं प्रयुक्तत्वादुपेन्द्रवज्रावृत्तम् । तल्लक्षणं तु " यदीन्द्रवज्राचरणेषु पूर्वे, भवन्ति वर्णा लघवः सुवर्णे !। अमन्दमाद्यन्मदने! तदानीमुपेन्द्रवज्रा कथिता कवीन्द्रैः ॥" इति ॥ १८ ॥

भा० टी० ॥ हे मन ! मैं तुझे संक्षेपसे कथन करता हूं । तू इधर उधर मत फिर ।उस जगदम्बाका शरण ले । जिस ( देवी ) को ब्रह्मा, विष्णु, महेश और इन्द्र आदि देवता सेवन करते हैं ॥ १८ ॥

याऽशिक्षिताऽप्युल्लसति प्रवीणा
विभावनाऽपीशरता भवादा ।
लोलेक्षणा हीनभयाऽप्युमा सा
क्रियात्सुबुद्ध्या उपजातिमन्तः ॥ १९ ॥

सं० टी० ॥ येति ॥ या ( देवी ), अशिक्षिता शिक्षामनीताऽपि प्रवीणा चतुरा; तथा भवात् आ जन्मन आरभ्य, विभावनाऽपि विगतवासनाऽपि, ईशरता ईश्वरनिरता; तथा हीनभया त्रासरहिताऽपि, लोलेक्षणा चलनयना, उल्लसति शोभते । सा उमा देवी, अन्तर्मनसि ममेति शेषः । सुबुद्ध्याः सुमतेः, उपजातिम् उत्पत्तिं क्रियात्करोतु । इत्यर्थः ॥

अत्र शिक्षारूपकारणेन विना चातुर्यरूपकार्यस्य, भावनारूपकारणेन च विना जन्मत ईश्वरासक्तिरूपकार्यस्य, तथा भयरूपकारणं विना नेत्रचलत्वकार्यस्य दर्शनाद्, देवीस्वाभाविकगुणोत्कर्षप्रकटनाच्च विभावनाऽलङ्कारः । तल्लक्षणं तु "विना कारणसद्भावं यत्र कार्यस्य दर्शनम् । नैसर्गिकगुणोत्कर्षभावनात्सा विभावना ॥" इति ॥

अपि चात्र प्रथमतृतीययोः पादयोर्दीर्घादिवर्णतया इन्द्रवज्राया दर्शनात्, तथा द्वितीयचतुर्थयोः पादयोर्ह्रस्वादिमवर्णत्वेन उपेन्द्रवज्राया दर्शनादुपजातिवृत्तम् । तल्लक्षणं "यत्र द्वयोरप्यनयोस्तु पादा, भवंति सीमंतिनि ! चन्द्रकान्ते !। विद्वद्भिराद्यैः परिकीर्तिता सा, प्रयुज्यतामित्युपजातिरेषा ॥" इति ॥ १९ ॥

भा० टी० ॥ जो ( देवी ) विना शिक्षा पाये चतुरा है, और जो वासना विना ही जन्मसे महेश्वरमें रति पाई हुई है । और डर विना ही चलनेत्रवाली शोभ रहीहै । वह देवी मनमें अच्छी बुद्धिकी उत्पत्तिको करो ॥ १९ ॥

२

हृद्दीपकं ते विपरीतपूर्वं
महौज आख्यानकमम्ब ! रूपम् ।
सुरा द्युलोकेऽथ नरा नृलोके
स्मरन्ति पातालतले च नागाः ॥ २० ॥

सं० टी० ॥ हृदिति ॥ हे अम्ब ! मातः ! ते तव, हृद्दीपकं मनःप्रदीपकं, हृदयस्य प्रकाशकमिति भावः । अविपरीतपूर्वम् अविपरीतमविरुद्धम् अनुकूलमिति भावः । तथाभूतं च तत्पूर्वं पुरातनं च तदिति कर्मधारयः । महौजः, प्रकृष्टतेजःशालि, आख्यानकं, आख्यानकं कथा, तस्येदं आख्यानकं कथासु वर्ण्यमानमिति भावः । रूपं सौन्दर्यं आकारं वा ( कर्म ); सुरा देवाः द्युलोके स्वर्गलोके, स्मरन्ति; अथ पुनः, नरा मनुष्या नृलोके मनुष्यलोके स्मरन्ति; नागाः काद्रवेयाश्च पातालतले नागलोके स्मरन्ति लोकत्रयस्मरणीया त्वमिति भावः । इत्यर्थः ॥

अत्र अन्तिमपादवर्त्तिना 'स्मरन्ति' इति क्रियापदेनैकेनैव पूर्वोक्तसर्ववाक्यार्थसंगतिर्जायतेऽतो दीपकालंकारः । तल्लक्षणं "आदिमध्यान्तवर्त्येकपदार्थेनार्थसंगतिः । वाक्यस्य यत्र जायेत तदुक्तं दीपकं यथा ॥" इति ॥

अत्र प्रथमपादस्य इन्द्रवज्रानुसारेण, त्रयाणां च पादानामुपेन्द्रवज्रालक्षणानुसारेण विरचनाद्विपरीताख्यानकीवृत्तम् । तल्लक्षणं तु "आख्यानकी स्यात्प्रकटीकृतार्थे !, यदीन्द्रवज्राचरणः पुरस्तात् । उपेन्द्रवज्राचरणास्त्रयोऽन्ये, मनीषिणोक्ता विपरीतपूर्वा ॥ " इति ॥ २० ॥

भा० टी० ॥ हे देवी ! हृदयको प्रकाशित करनेवाले, तेजस्वी, कथाओंमें वर्णन किये गये ऐसे आपके रूपका, देवता स्वर्गमें; और मनुष्य मनुष्यलोकमें; और नाग पातालमें स्मरण करते हैं ॥ २० ॥

---

१ विपरीतपूर्वम् आख्यानकं "विपरीताख्यानकम्" इति वृत्तसूचनाय इत्थं न्यस्तम् तेन मतान्तराभिप्रायोऽपि सूचितः । आख्यानकीस्थान आख्यानकसंकेतस्तु वसन्ततिलका ( क ) वज्ज्ञेयः । प्रथमपादारम्भे 'आख्यानकी' इति संकेतने वृत्तस्य पूर्वसंकेतनेन पूर्वक्रमभंगो भवेत् तदन्यत्रिपादारम्भे च तथा प्रयोगेण पूर्वस्य गुरुत्वाच्छन्दोनियमभंगः स्यादत इत्थं प्रयुक्तम् ॥

त्वन्महेऽतिशयसंगतोत्सुक--
नृध्वनिर्गुरुरथोद्धतात्मकः।
निद्रितान्दधिमथि ! स्तुतिप्रथो
मंक्षु जागरयति त्रिविश्वगान् ॥ २१ ॥

सं॰ टी॰ ॥ त्वदिति ॥ हे दधिमथि ! देवि ! त्वन्महे तव नवरात्रोत्सवे; "मह उद्धव उत्सवः" इत्यमरः। स्तुतिप्रथः स्तुतिप्रकाशकः, गुरुर्विस्तीर्णः, अथ पुनः, उद्धतात्मक उन्नतात्मा, उच्चैर्गत इति भावः। अतिशयेनातीव संगताः संमिलिता ये उत्सुका उत्कण्ठिता नरो मनुष्यास्तेषां ध्वनिः शब्दः; निद्रितान् संजातनिद्रान् 'तारकादित्वादितच्' त्रिविश्वगाञ्जगत्रयवर्तिनः। लोकानिति शेषः। मंक्षु शीघ्रं, जागरयति विनिद्रीकरोति उद्धतश्च कोऽपि कमपि सुप्तं जागरयत्येव। अनेनोत्सव-लोक-ध्वानातिशयः सूचित इत्यर्थः ॥

अत्र महोत्सवागतमनुष्यध्वनिरूपस्य वस्तुन उत्कर्षं वक्तुं तत्कृतत्रिलोकीजागरणमसंभाव्यमुक्तम्, अतोऽतिशयालंकारः। तल्लक्षणं तु "वस्तुनो वक्तुमुत्कर्षमसंभाव्यं यदुच्यते। वदन्त्यतिशयाख्यं तमलंकारं बुधा यथा॥" इति॥

किञ्च प्रथमतृतीय-सप्तम-नवमैकादशानामक्षराणां दीर्घत्वात्, तदन्येषां च ह्रस्वतया रथोद्धतावृत्तम्। तल्लक्षणं तु "आद्यमक्षरमतस्तृतीयकं, सप्तमं च नवमं दशान्तिमम्। दीर्घमिन्दुमुखि ! यत्र जायते, तां वदन्ति कवयो रथोद्धताम्॥" इति ॥ २१ ॥

भा॰ टी॰ ॥ हे दधिमथी ! आपके उत्सवमें अत्यन्त इकट्ठे हुए लोगोंका स्तुतिको सूचन करनेवाला कोलाहल सोये हुए तीन जगत्के लोगोंको जल्दी जगा देता है ॥ २१ ॥

हृद्गृहे तुलतमः प्रसरे मे
स्वागताऽत्र सुमनोमणिरम्बा।
तेजसां निधिरपास्य तमांसि
सा प्रकाशमनिशं वितनोतु ॥ २२ ॥

सं० टी०. ॥ हृदिति ॥ तेजसां महसां निधी राशिः, सुमनोमणिर्देवीरत्नं, इह देववाचकस्य सुमनश्शब्दस्य स्त्रीत्वेऽपि न विशेषः ॥ 'विबुधीमणिः' इति पाठान्तरेऽपि स एवार्थः । सा अम्बा देवी; अतुलोऽसदृशः तमः—प्रसरः अविवेकरूपान्धकारनिकरो यत्र तथोक्ते, मे मम हृद्गृहे मनोमन्दिरे; स्वागता सुष्ठु आगता सती, तमांसि पूर्वोक्तरूपानन्धकारान् अपास्य अपहृत्य, अनिशं निरन्तरं प्रकाशं ज्ञानरूपं, वितनोतु विस्तारयतु । अज्ञानमपहृत्य ज्ञानं ददात्वित्यर्थः ॥

अत्राऽन्धकारनाशरूपमर्थम् उत्पादयतो देवीरूपस्य कर्तुः तेजोनिधित्व—सुमनोमणित्वं—विशेषणेन तस्यान्धकारस्य नाशनयोग्यता युक्त्या दर्शिताऽतो हेतुरलंकारः । तल्लक्षणं तु "यत्रोत्पादयतः किंचि—दर्थं कर्तुः प्रकाश्यते । तद्योग्यतायुक्तिरसौ, हेतुरुक्तो बुधैर्यथा ॥" इति ॥

अपि चात्र नवमदशमाक्षरयोः ( ह्रस्वत्वदीर्घत्वरूप ) व्यत्ययदर्शनात्, तदन्येषां च वर्णानां पूर्वोक्तरथोद्धतालक्षणानुसारित्वात् स्वागतावृत्तम् । तल्लक्षणं "अक्षरं च नवमं दशमं चेद् व्यत्ययाद्भवति यत्र विनीते । प्राक्तनैः सुनयने! यदि सैव, स्वागतेति कविभिः कथिताऽसौ ॥" इति ॥ २२ ॥

भा० टी० ॥ तेजका निधानरूप देवियोंमें रत्नसमान वह माता, बहुत अज्ञानरूप अन्धकारसे भरे हुए मेरे हृदयरूप गृहमें आकर अन्धकारको दूर करके ( ज्ञानरूप ) प्रकाशको निरंतर फैलावो ॥ २२ ॥

**केशेष्वादाय त्वं क्षितौ दुष्टशब्द—**
**पर्यायोक्तिस्पृग् यावदालोठयोऽरीन् ।**
**तावत्तन्नार्यो दृक्पथं कीर्णकेश्य**
**आजग्मुस्ते भोः शर्मदे ! वैश्वदेवि ! ॥ २३ ॥**

सं० टी० ॥ केशेष्विति ॥ भोः शर्मदे ! कल्याणदायिनि ! वैश्वदेवि ! विश्वस्य जगत इयं वैश्वी, सा चासौ देवीति वैश्वदेवी, जगत्पूज्येति भावः । तत्सम्बुद्धौ हे वैश्वदेवि ! दुष्टशब्दस्य पर्याया दुरात्मादयस्तेषाम् उक्तिः कथनं तां स्पृशति सेवते तादृशी, रे दुष्ट ! रे दुरात्मन् ! इत्यादि भाषमाणेति भावः ।

त्वं यावत् क्षितौ भूतले, अरीन् शत्रून्, आलोठय: इतस्ततः आघूर्णयः; तावत्, तेषाम् अरीणां नार्यः स्त्रियः, कीर्णा विकीर्णाः केशाः कचा याभिस्तथोक्ताः ( सत्यः ) ते तव, दक्पथं दृष्टिमार्गम्, आजग्मुः आययुः । स्वभर्तृमरणेन विकीर्णकेश्य एव त्वद्दर्शनपथमागता इत्यर्थः ॥

अत्र देवीकृत--रिपुलोठन--वर्णनरीत्या, ततश्च रिपुनारी--विकीर्णकेशदर्शन-रीत्याऽतत्परतया जल्प्यमानेन वस्तुना विवक्षितं रिपुमरणं प्रतीयतेऽतः पर्यायोक्तिरलंकारः । तल्लक्षणं तु "अतत्परतया यत्र, जल्प्यमानेन वस्तुना । विवक्षितं प्रतीयेत, पर्यायोक्तिरियं यथा ॥" इति ॥

किञ्चात्र सप्तम--दशमयोर्ह्रस्वतयाऽन्येषां च दीर्घतया विरचनेन, पञ्चभिः सप्तभिश्च विश्रामदर्शनाद् वैश्वदेवीवृत्तम् । तल्लक्षणं तु "ह्रस्वो वर्णः स्यात्सप्तमो यत्र बाले!, तद्वद् बिम्बोष्ठि! न्यस्त एकादशाद्यः । बाणैर्विश्रामस्तत्र चेद्वा तुरंगैर्नाम्ना निर्दिष्टा सुभ्रु ! सा वैश्वदेवी ॥" इति ॥ २३ ॥

भा०टी० ॥ हे कल्याणदायिनी ! जगत्पूज्या देवी ! ज्योंकि आपने दुष्टआदि शब्दोंसे धिक्कार देकर और केश पकड़कर शत्रुओंको पृथ्वीपर लुटाये, त्योंही उनकी स्त्रियें केश बिखेरकर आपके सामने नजर आईं। अर्थात् शत्रु मरगये। इसी लिये उन्होंने केश बिखेरे ॥ २३ ॥

**तव देवि ! समाहितहृत्तु यदाऽ-**
**यितुमिच्छति तीर्थमसौ सुजनः ।**
**नवरात्रकपर्व तदाऽस्य भव-**
**त्यतिसंनिहितं हृततोटकथम् ॥ २४ ॥**

सं० टी० ॥ तवेति ॥ हे देवि ! यदा समाहितहृत् समवहितमनाः असौ सुजनः साधुलोकः, तव ते, तीर्थे दधिमथीक्षेत्रमित्यर्थः । अयितुं गन्तुमिच्छति वाञ्छति; तदाऽस्य ( सुजनस्य ), हृता दूरीकृता तोटस्य कलहकर्मणः कथा येन तत् तथोक्तम् । 'तुट कलहकर्मणि' इत्यस्य घञि 'तोट' इति रूपम् । कलहकर्मनिवारकमिति भावः । इत्यनेन देवीप्रभावात्तादृशे जायमानेऽपि जनसंघट्टे नवरात्र पर्वणि मिथः कलहादिकं न भवतीति ध्वनितम् । तादृशं नवरात्र-

कपर्व, नवरात्रयः समाहृता नवरात्रम्। "अर्हः-सर्वैकदेश" इत्यादिनाऽच्, 'संख्यापूर्वं रात्रं क्लीवम्' इति क्लीबत्वम्। तदेव नवरात्रकम्। स्वार्थे कः। तस्य पर्व उत्सवोऽवसरो वा। अतिसंनिहितम् अतीवाऽऽसन्नं भवति। नवरात्रोत्सवा हि वत्सरे चैत्राषाढाश्विनमाघेषु चतुर्षु मासेषु चत्वारो भवन्ति, तत्रैकतरस्तु कश्चन संनिहितो भवेदेव तीर्थे जिगमिषतो लोकस्य इत्यर्थः।

अत्र तीर्थगमनेच्छारूपस्य कार्यस्यारम्भे पुनस्तत्प्रेरकं नवरात्रपर्वसांनिध्यं कारणान्तरं दैवाज्जायमानं वर्णितमतः समाहितमलंकारः। तल्लक्षणं "कारणान्तरसंपत्तिर्दैवादारम्भ एव हि। यत्र कार्यस्य जायेत, तज्जायेत समाहितम्॥" इति॥

किञ्चात्र तृतीय-षष्ठ-नवमवर्णानां विरामस्थानीयस्य द्वादशस्य च वर्णस्य गुरुत्वात्, तदन्येषां च लघुत्वात् तोटकं वृत्तम्। "सतृतीयकषष्ठमनन्त (ङ्ग) रते, नवमं विरतिप्रभवं गुरु चेत्। घनपीनपयोधरभारनते! ननु तोटकवृत्तमिदं कथितम्॥" इति॥ २४॥

भा० टी०॥ हे देवी! जब कि भक्तिमान सज्जन आपके तीर्थको जाना चाहता है। अर्थात् जिस समय जानेकी इच्छा करता है; उस समय कलहादि दूर करनेवाला नवरात्रका उत्सव उसके पास ही आजाता है। अर्थात् वर्षमें चार नवरात्र आते हैं, जैसे–चैत्र न., आषाढ–न., आश्विन–न., और माघ नवरात्र। इनमेंसे कोई तो एक पास आवेही, अतः अवश्य ही जाता है॥ २४॥

गृहीत्वेभ(श)यातं परीवर्त्तयोग्यं
भुजङ्गप्रयातं ह्यदा द्विड्वधूभ्यः।
उपादाय सौभाग्यवत्तां च ताभ्यो
ददासि स्म दौर्भाग्यवत्त्वं त्वमम्ब! ॥२५॥

सं० टी०॥ गृहीत्वेति॥ हे अम्ब! मातः! त्वं, द्विषां रिपूणां वधूभ्यः स्त्रीभ्यः परीवर्त्तयोग्यं वरणार्हं, स्पृहणीयमिति भावः। इभयातं इभेषु हस्तिषु यातं गमनं, तद् गृहीत्वा उपादाय, भुजङ्गेषु सर्पेषु यातं गमनं (हि निश्चयेन)

अदाः दत्तवती । सर्पेषु गमनेन कान्तारानि वा सस्तासां प्रकटितः । ईशयातमिति पाठे, ईशे स्वपतौ यातं गमनं, तद् गृहीत्वा, भुजङ्गेषु विटेषु प्रयातं गमनम् अदाः इत्यर्थो ज्ञेयः । च पुनः ताभ्यो रिपुस्त्रीभ्यः सौभाग्यवत्तां सौभाग्यम् उपादाय, दौर्भाग्यवत्त्वं दौर्भाग्यं, ददासि स्म दत्तवती । इत्यर्थः ।

अत्रेभ ( श ) यातरूपस्यार्थस्य भुजङ्गप्रयातरूपेणार्थेन सदृशतया, तथा दौर्भाग्यस्य सौभाग्येनाऽसदृशतया परिवर्त्तनात्परिवृत्तिरलङ्कारः । तल्लक्षणं तु " परिवर्त्तनमर्थेन, सदृशाऽसदृशेन वा । जायतेऽर्थस्य यत्राऽसौ, परिवृत्तिर्मता यथा ॥ " इति ॥

अपि चात्र प्रथम-चतुर्थ-सप्तम-दशमवर्णानां ह्रस्वतयाऽन्येषां च दीर्घतया ग्रथनेन भुजङ्गप्रयातं वृत्तम् । तल्लक्षणं तु "यदाद्यं चतुर्थं तथा सप्तमं स्या-च्चथैवाक्षरं ह्रस्वमेकादशाद्यम् । शरच्चन्द्रविद्वेषिवक्त्रारविन्दे !, तदुक्तं कवीन्द्रैर्भुजङ्गप्रयातम् ॥" इति ॥ २५ ॥

भा० टी० ॥ हे देवी ! आपने शत्रुओंकी स्त्रियोंसे हाथियोंपर चलना लेकर सर्पोंमें चलना दिया । और सौभाग्य ( सौहाग ) लेकर दौर्भाग्य ( दौहाग ) दिया । अर्थात् आपने जब शत्रुओंको मारे, तब उनकी स्त्रियें हाथीपर बैठने आदि भोग छूटनेसे सर्पयुक्त वनमें रहना शुरू किया, इसही लिये दौहागपन पाया ॥ २५ ॥

**मधुकृदम्ब ! यथा क्रमनीरजं**
**द्रुतविलम्बितयातमहं श्रये ।**
**जयति यन्निजभा-मृदुता-गतैः**
**किसलयं च बिसं च सितच्छदम् ॥ २६ ॥**

सं० टी० ॥ मध्विति ॥ हे अम्ब ! दधिमथि ! यथा मधुकरो भ्रमरस्तथाऽहं द्रुतं शीघ्रं विलम्बितं मन्दं च यातं गमनं यस्य तत्तथाभूतं क्रमनीरजं चरणारविन्दं, ' क्रमः कल्पांघ्रिशक्तिषु । परिपाट्यां ' इति हैमः । जातित्वादेकवचनम् । श्रये सेवे । यथा हि भ्रमरः कमलं सेवते, तथाऽहं तव पादरूपं कमलं श्रय इति तात्पर्यम् । यत् ( क्रमनीरजं ), निजानि यानि भा-मृदुता-गतानि का-

न्ति—कोमलता—गमनानि तैः, किसलयं पल्लवं, विसं मृणालं च, सितच्छदं हंसं च; जयति अभिभवति । कान्त्या किसलयं, कोमलतया विसं, गमनेन च हंसं जयतीत्यर्थः ॥

अत्रोक्तानां भा-मृदुता-गतरूपाणां पदार्थानां सम्बंधिनः तत्क्रमेणैव किसलय-बिस-सितच्छदरूपा अर्था निबद्धा अतो यथासंख्यमलंकारः । स च तत्पर्याय 'यथाक्रम' शब्देन मूले सूचितः, द्रुतविलम्बितवृत्ते यथासंख्यशब्दस्यागमनाऽसम्भवात् । तल्लक्षणं तु "यत्रोक्तानां पदार्थानामर्थाः सम्बंधिनः पुनः । क्रमेण तेन बध्यन्ते, तद्यथासंख्यमुच्यते ॥" इति ॥

किञ्चात्र चतुर्थ-पञ्चम-दशमान्त्यानां वर्णानां गुरुत्वेनाऽन्येषां च लघुत्वेन रचनाद् द्रुतविलम्बितं वृत्तम् । तल्लक्षणं तु "अयि कृशोदरि ! यत्र चतुर्थकं, गुरु च सप्तमकं दशमांतिमम् । त्रिरतिगं च तथैव सुमध्यमे !, द्रुतविलम्बितमित्युपदिश्यते॥" इति ॥ २६ ॥

भा० टी० ॥ हे देवी ! भ्रमरके जैसे मैं, शीघ्र और मन्दगातिवाले आपके चरणरूप कमलका आश्रय करता हूं । जोकि चरणकमल कान्तिसे नवीनपत्रको, और कोमलतासे कमलतन्तुको, और गमनसे हंसको जीतता है ॥ २६ ॥

**विषमं क्व ते महदहो चरितं**
**प्रमिताक्षरा क्व नु ममोक्तिरियम् ।**
**अत एव भो दधिमथि ! प्रणतिं**
**कलयामि केवलमहं विनयात् ॥ २७ ॥**

सं० टी० ॥ विषममिति ॥ भो दधिमथि ! अहो इत्याश्चर्ये, तव ते विषमं गहनं चरितं वर्णनीयं वृत्तं क्व कुत्र ?, नु तर्के, मम इयं प्रमिताक्षरा परिमितवर्णवती उक्तिर्भणितिः क्व, अस्त्विति शेषः । अत एवाऽहं, केवलं, विनयात् नम्रतया, प्रणतिं प्रणामं, कलयामि करोमि । त्वच्चरितवर्णनाऽशक्त्याऽहं प्रणाममात्रं करोमीति भावः । इत्यर्थः ॥

अत्र विषमचरितवस्तुवर्णनरूपः सम्बन्धः उक्तेः प्रमिताक्षरत्वरूपेणानौचित्येन असम्भाव्यो वर्णित इत्यतो विषमालङ्कारः। तल्लक्षणं तु "वस्तुनो यत्र सम्बन्धमनौचित्येन केनचित्। असम्भाव्यं वदेद्वक्ता, तमाहुर्विषमं यथा ॥" इति ॥

अथ चात्र पञ्चमस्य वर्णस्य गुरुतया, षष्ठस्य च लघुतया, अन्येषां च पूर्वोक्ततोटकवृत्तानुसारेण विरचनात्प्रमिताक्षरावृत्तम्। तल्लक्षणं तु "यदि तोटकस्य गुरु पञ्चमकं, विहितं विलासिनि! तदक्षरकम्। रससंख्यकं गुरु न चेदबले!, प्रमिताक्षरेति कविभिः कथिता ॥" इति ॥ २७ ॥

भा० टी० ॥ हे दधिमथी! आपका गहन चरित कहां रहा, और मेरी अल्प अक्षरवाली उक्ति कहां? इसलिये हे देवी! मैं केवल आपके लिये विनयसे प्रणाम ही करता हूं। अर्थात् मैं अपनी अल्पउक्तिसे तेरे गहन चरित वर्णन नहीं करसक्ता, केवल प्रणामही करता हूं ॥ २७ ॥

**यश आदित या निजवैरिणा–**
**मसुभिरेव सहोक्तिसुरीस्तुतम्।**
**लघु सैतु यथा हरिणीप्लुता**
**दधिमथी सुमुदा सह हृद्वनम् ॥ २८ ॥**

सं० टी० ॥ यश इति ॥ या (दधिमथी), निजवैरिणां स्वरिपूणां, असुभिः प्राणैरेव सह समं, उक्तिसुरी वाग्देवी सरस्वतीति यावत्। तया स्तुतं प्रशस्तं, अत्युज्ज्वलतया सरस्वत्यापि श्लाघितमिति भावः। यशः कीर्तिम् आदित, अग्रहीत्। आदाञो लुङि "आङोदो" इत्यादिना तङि "स्थाघ्वोरिच्च" इतीत्वं सिचः कित्वं च। रिपुमरणसमकालमेव तदीयं यशोऽस्याः पार्श्वे आगतमिति तात्पर्यम्। सा दधिमथी, यथा यद्वत्, प्लुता उच्छलिता, हरिणी मृगी, तथा हृद्वनं हृदयकाननं ममेति शेषः। सुमुदा शोभनहर्षेण, सह, एतु आगच्छतु। तदागमनसमकालमेव मम हृदये मुदागमनमस्त्विति प्रत्याशा। तस्या हृद्वासे हर्ष उचित एवेत्यर्थः ॥

अत्र पूर्वार्द्धेऽसुग्रहणरूपस्य कारणस्य यशोग्रहणरूपकार्यशक्ततां वक्तुं तयोरसुशोग्रहणरूपयोः हेतुकार्ययोः सह समुत्पत्तिकथा दर्शिता, उत्तरार्द्धेऽप्येवमेव

देवी—मुदा—गमनयोर्हेतुकार्ययोः सहोत्पत्तिर्वर्णिताऽतः सहोक्त्यलंकारः । तल्लक्षणं तु "सहोक्तिः सा भवेद्यत्र, कार्यकारणयोः सह । समुत्पत्तिकथा हेतोर्वक्तुं तज्जन्मशक्तताम् ॥" इति ॥

किञ्चात्र प्रथम—तृतीयपादयोराद्याक्षराभावेन पूर्वोक्तद्रुतविलम्बितवृत्तस्य विरचनाद् हरिणीप्लुतावृत्तम् । तल्लक्षणं तु "प्रथमाक्षरमाद्यतृतीययोर्द्रुतविलम्बितकस्य हि पादयोः । यदि नास्ति तदा कमलेक्षणे !, भवति सुंदरि ! सा हरिणीप्लुता ॥" इति ॥ २८ ॥

भा० टी० ॥ जिस ( देवी ) ने शत्रुओंके प्राणोंके साथ ही, सरस्वतीसे भी प्रशंसा किये गये यशको ग्रहण करलिया । वह दधिमथी देवी हर्षके साथ दौड़ीहुई हरिणीके जैसे ( मेरे ) हृदयरूप वनमें आओ । अर्थात् शत्रुओंके मारतेही उनका यश देवीके पास आगया । और उस देवीके आते ही हृदयमें हर्ष भी आजाता है ॥ २८ ॥

युताऽपि सद्वेषतया विरोधहा
रिपुं हि याऽऽहन्नरुदत्तु तद्वधूः ।
उमाऽकुलीनत्वविराजिताऽपि सा
प्रशस्तवंशस्थनिजात्मकाऽवतात् ॥ २९ ॥

सं० टी० ॥ युतेति ॥ सद्वेषतया विरोधसहितत्वेन युताऽपि युक्ताऽपि, सद्वेषाऽपीति भावः । विरोधहा विरोधं द्वेषं जहाति त्यजति तथोक्ता । इति विरोधः । सद्वेषतया शोभनवेशधारितया युता विरोधहीना च । इत्यर्थे विरोधपरिहारः । या हि ( देवी ) रिपुं शत्रुं, आहन् अताडयत्; तु परन्तु, तद्वधूः तस्य रिपोः वधूः स्त्री, अरुदत् रुदितवती । यस्य हि ताडनं स एव रुद्यान्नान्यः इत्यर्थकल्पनया विरोधाभासः । भर्तरि प्रहते तस्य मृतप्रायत्वात्तत्स्त्रियो रोदनमुचितमेवेति तत्परिहारः । अकुलीनत्वं सद्वंशजन्माभावः, तेन विराजिता शोभिताऽपि, अकुलीनाऽपीति यावत् । प्रशस्तः श्लाघितो यो वंशः कुलं तत्र तिष्ठति तथोक्तो निजः स्वकीय आत्मा यस्याः सा । इति विरोधः । कौ पृथ्व्यां लीना स्थिता, तद्भावः कुलीनत्वं, तन्नेति तत्, तेन विराजिता

शोभिता । देवीत्वात्स्वर्गवासिनीति भावः । सुवंश्या च इत्यर्थे तत्परिहारः । सा उमा देवी, अवतात् रक्षतु । अस्मानिति शेषः । इत्यर्थः ॥

अत्र सद्वेषतया युताऽपि विरोधहा, अकुलीनाऽपि प्रशस्तवंशास्थेति शब्दविरोधः, तथा रिपोः प्रताडनं तद्वध्वाश्च रोदनमित्यर्थविरोध आभासते तत्त्वतश्च नास्तीति विरोधालंकारः । तल्लक्षणं तु " आपाते हि विरुद्धत्वं; यत्र वाक्ये, न तत्त्वतः । शब्दार्थकृतमाभाति, स विरोधः स्मृतो यथा ॥ " इति ॥

अथ चात्रोपेन्द्रवज्रालक्षणोक्तान्तिमवर्णानामुपान्त्यतया लघूकरणेन वंशस्थवृत्तम् । तल्लक्षणं तु " उपेन्द्रवज्राचरणेषु सन्ति चे-दुपान्त्यवर्णा लववः परे कृवाः । मदोल्लसद्भूजितकामकार्मुके !, वदन्ति वंशस्थमिदं बुधास्तदा ॥ " इति ॥ २९ ॥

भा० टी० ॥ विरोध छोड़नेवाली भी सद्वेषा ( द्वेषसहित ) जिस देवीने मारा शत्रु, और रोई उसकी स्त्री । वह अकुलीना ( अच्छे कुलमें न होनेवाली ) भी अच्छे वंशमें जन्म पाई हुई देवी रक्षाकरो । इस अर्थसे विरोध झलकता है, पर वास्तवमें उन शब्दोंका ऐसा अर्थ करनेसे विरोध नहीं है। जैसे-सद्वेषा-सुन्दर पोशाकवाली, अकुलीना-पृथ्वीमें लीन नहीं अर्थात् स्वर्गवासिनी; भर्ताके मारनेसे स्त्रीका रोना ठीकही है ॥ २९ ॥

**सैषाऽस्ति दुर्गाऽवसरन्महामहा**
**यत्पाणिसंताडनयैव सोऽसुरः ।**
**संमूच्छर्य सद्यो विकटास्य उत्कटो-**
**जा इन्द्रवंशार्तिकरोऽपतद्भुवि ॥ ३० ॥**

सं० टी० ॥ सेति ॥ अवसरत् प्रसरत् महद् बृहद् महस्तेजो यस्याः सा तथोक्ता एषा सा दुर्गा देवी ( दधिमथी ) अस्ति, यस्याः पाणिसंताडना करतलप्रहारः तयैव, स प्रसिद्धः, उत्कटौजाः प्रकृष्टतेजाः, इन्द्रस्य यो वंशः कुलं जयन्तादय इति भावः । तस्य आर्तिकरः पीडादायी देवव्यथादायीति भावः । विकटास्यः तन्नामा, असुरो दैत्यः, सद्यः तत्कालं, संमूच्छर्य मूर्च्छा प्राप्य, भुवि पृथ्व्यां, अपतत् पपात । इत्यर्थः ॥

अत्र देवीवर्णनरूपस्य प्रस्तुतार्थस्य उपलक्षणं विकटास्यहननरूपमुत्कृष्टमर्थान्तरमुक्तं, अतोऽवसरालंकारः । तल्लक्षणं तु "यत्रार्थान्तरमुत्कृष्टं, संभवत्युपलक्षणम् । प्रस्तुतार्थस्य स प्रोक्तो, बुधैरवसरो यथा" ॥ इति ॥

अत्र वंशस्थलक्षणोक्तपूर्वाक्षराणां गुरुतया निर्माणादिन्द्रवंशावृत्तम् । तल्लक्षणं तु "यस्यामशोकाङ्कुरपाणिपल्लवे !, वंशस्थपादा गुरुपूर्ववर्णकाः । तारुण्यहेलारतिरङ्गलालसे ! तामिन्द्रवंशां कवयः प्रचक्षते ॥" इति ॥ ३० ॥

भा० टी० ॥ यह वो दधिमथी देवी है, जिसकी हाथकी ताडनासे ही, वो देवीको दुख देनेवाला तेजस्वी दैत्य विकटास्य, एकदम मूर्छा पाकर पृथ्वीपर पड़गया ॥ ३० ॥

सारं भवे दधिमथि ! सु प्रभावती
सुप्राणिताऽत्र च नरताऽत्र विप्रता ।
तत्राऽपि षट्कृतिरतता ततोऽप्यहो
त्वद्भक्तताऽत इह भजे त्वकामहम् ॥ ३१ ॥

सं०टी० ॥ सारमिति ॥ हे दधिमथि ! भवे संसारे, सुप्रभावती शोभनकान्तिमती तेजःशालिनीति भावः । सुप्राणिता उत्तम-शरीरित्वं करिधेन्वादिकमिति भावः । सारम् अत्र च सुप्राणितायामपि नरता मनुष्यत्वं सारं, अत्र मनुष्यतायामपि विप्रता ब्राह्मणत्वं सारं, तत्राऽपि ब्राह्मणतायामपि षट्कृतिरतता षट्कर्मपरायणत्वं सारं, ततोऽपि ततः परं त्वद्भक्तता त्वत्सेवकत्वं सारं, अतः कारणात्, अहम् इह संसारे, त्वकां त्वां, भजे सेवे । संसारसारभूतस्त्वद्भक्तो भवामीति भावः । इत्यर्थः ॥

अत्र सुप्राणितादिनिर्धारितात्सारात्ततस्ततो नरत्वविप्रत्वादिकं सारं निर्धारितमतः सारालंकारः । तल्लक्षणं तु "यत्र निर्द्धारितात्सारात्सारं सारं ततस्ततः । निर्द्धार्यते यथाशक्ति, तत्सारमिह कथ्यते ॥" इति ॥

किञ्चात्र प्रथमयोर्द्वयोर्वर्णयोश्चतुर्थ-नवमैकादश-त्रयोदशानां च वर्णानां गुरुतया चतुर्भिर्नवभिश्च विश्रामदर्शनात् प्रभावतीवृत्तम् । तल्लक्षणं तु "यस्यां प्रिये ! प्रथमकमक्षरद्वयं, तुर्यं तथा गुरु नवमं दशान्तिमम् । सान्त्यं भवेद्यतिरपि चेद्युगग्रसा लक्ष्यताममृतरुते ! प्रभावती ॥" इति ॥ ३१ ॥

भा० टी० ॥ हे दधिमथी ! संसारमें सार तेजस्वी अच्छा प्राणी होना सार है । और उसमें भी मनुष्यपन, उसमें भी ब्राह्मण होना, वहां भी पठन पाठनादि ६ कर्मोंमें तत्पर रहना सार है । उसमें भी तेरा भक्त होना सार है । इसलिये इस संसारमें आपका सेवन करता हूं ॥ ३१ ॥

संराजत्यधिगतशङ्करोत्तमाङ्गा-
श्लेषश्रीः श्रितगणसम्प्रहर्षिणी या ।
सा युष्मान्पृथुलहारिस्थितिः सुपूज्य-
सत्तीर्था समवतु हैमवत्यपंका ॥ ३२ ॥

सं० टी० ॥ समिति ॥ अधिगता प्राप्ता शङ्करस्य शिवस्य उत्तमैः अंगैः आश्लेषश्रीरालिङ्गनलक्ष्मीर्यया सा तथाभूता, श्रित आश्रितो यो गणः प्रमथगणस्तं सम्प्रहर्षयति सम्मोदयति तथोक्ता, या संराजति शोभते; सा, पृथुले पीवरे हरौ सिंहे स्थितिरध्यासनं यस्याः सा तथोक्ता, सिंहवाहनेति भावः । सुपूज्यं पूजार्हं सत् प्रशस्तं तीर्थं क्षेत्रं यस्याः सा तथोक्ता, अपंका अपापा, हैमवती देवी ( दधिमथी ) युष्मान्, समवतु रक्षतु ॥ अथ हिमवतः प्रभवति हैमवती गङ्गापि भवति तत्पक्षे--अधिगता प्राप्ता शंकरस्योत्तमाङ्गे शिरसि आश्लेषश्रीः सम्पर्कलक्ष्मीर्यया सा, तथा श्रितानामाश्रितानां भक्तानामिति भावः । यो गणः समूहस्तं सम्प्रहर्षयति तथोक्ता, या संराजति; सा पृथूनां महतीनां लहरीणां वीचीनां स्थितिर्यस्यां सा तथाभूता, सुपूज्यं तीर्थम् ऋषिसेवितजलं यस्यां सा तथोक्ता, "तीर्थं शास्त्राध्वरक्षेत्रोपायोपाध्यायमन्त्रिषु । अवतारर्षिजुष्टाम्भःस्त्रीरजःसु च विश्रुतम्" इति विश्वः । अपंका अकर्दमा निर्मलेति यावत् । हैमवती गंगा, समवतु । इत्यर्थः ॥

अत्रैकमपि वाक्यं 'गण' इत्यादिभिस्तैरेव पदैः, 'पृथुलहारि' इत्यादिभिन्नपदैश्च एकस्माद्देवीवर्णनरूपादर्थाद् अन्यं गङ्गावर्णनरूपमर्थं वक्ति; अतः श्लेषोऽलंकारः । तल्लक्षणं तु "पदैस्तैरेव भिन्नैर्वा, वाक्यं वक्त्येकमेव हि । अनेकमर्थं यत्रासौ, श्लेष इत्युच्यते यथा ॥" इति ॥

किञ्चात्र त्रयाणां प्रथमवर्णानां अष्टम-दशम-द्वादश-त्रयोदशानां चाक्षराणां गुरुत्वात्तदन्येषां च ह्रस्वतया, त्रिभिर्दशभिश्च विश्रामसम्भवात्प्रहर्षिणीवृत्तम् ।

तल्लक्षणं तु "आद्यं चेत्त्रितयमथाष्टमं नवांत्यं, द्वावन्त्यौ गुरुविरतौ सुभाषिते ! स्यात् । विश्रामो भवति महेशनेत्रदिग्भि-र्विज्ञेया ननु सुदति ! प्रहर्षिणी सा ॥" इति ॥ ३२ ॥

भा० टी० ॥ महादेवके उत्तम अंगोंके साथ आलिंगनकी शोभा पाई हुई, और आश्रित प्रमथगणको हर्षित करनेवाली जो ( देवी ) शोभाको प्राप्त होती है। वह सिंहपर वैठी हुई, पूज्य तीर्थ ( क्षेत्र ) वाली, निष्पाप देवी तुम्हारी रक्षा करो। यह श्लोक गंगाका भी अर्थ बतलाता है, जैसे—महादेवके शिर पर रही हुई, भक्तोंको खुश करनेवाली जो शोभित है। वह वड़ी २ लहरियोंसे शोभित, पूज्य तीर्थ ( पवित्र जल ) वाली, निर्मल गंगा तुम्हारी रक्षा करो ॥ ३२ ॥

**लोका ! इहास्त इति रत्नसमुच्चयोऽयं**
**स्तम्भोऽथ चित्रकृदुमाऽऽयतनं ह्रदोऽन्धुः ।**
**सान्द्रं वसन्ततिलकं च सुचारु गोष्ठ-**
**माङ्गल्यकोदवनमित्यमुमाश्रयध्वम् ॥ ३३ ॥**

सं० टी० ॥ लोका इति ॥ हे लोका जनाः ! इति वक्ष्यमाणप्रकारेण, अयम् एषः, इह लोक इति शेषः। रत्नानां समुच्चयः समुदायः, आस्ते तिष्ठति वर्तत इति भावः। तं च पृथक्पृथक् कथयति—चित्रकृदिति सर्वेषामेव रत्नत्वसूचकानां शब्दानां विशेषणम्। चित्रकृत् निराधारत्वेन आश्चर्यकारी, स्तम्भः दधिमथीमंदिरस्तम्भः। तत्र ह्येकोऽनाधारस्तम्भो देवीप्रभावाद्वर्त्तते। अथ च चित्रकृत् पृथ्वीविदारणपूर्वकनिस्सारितस्वप्रतिमितित्वेन आश्चर्यकारिणी, उमा देवी दधिमथीति यावत्। चित्रकृत् पृथ्वीनिर्गतमुख्यविभागत्वेनाश्चर्यकारि आयतनं मंदिरं; चित्रकृत् सदैवोपकण्ठजलत्वेनाश्चर्यकारी, ह्रदो नदः, चित्रकृत् मरुकूपतयाऽपि सदैवासन्नजलत्वेनाश्चर्यकारी, अन्धुः कूपः; च पुनः, चित्रकृत् सदैव सुपवित्रदर्भशालित्वेन विशेषतः फुल्लतया चाश्चर्यकारि, सान्द्रं वृक्षादिभिः स्निग्धं, सुचारु सुमनोहरं, वसन्तस्य पुष्पसमयस्य तिलकं तिलकभूतं, गोष्ठो 'गोठ' इति प्रसिद्धो ग्रामविशेषः, तथा मांगल्यकोदो 'मांगळोद' इति प्रसिद्धो ग्रामवि-

१ माङ्गल्यकं मङ्गलकारि उदकं जलं यत्र स तथाभूतः। संज्ञायामुदकस्योदादेशः।

शेषः, तयोर्वनं काननम्। इत्येयं रत्नसमुच्चय इति पूर्वेण सम्बन्धः। इति। अतः कारणात्, अमुं पूर्वोक्तं रत्नसमुच्चयं, आश्रयध्वं भजध्वम्। एतानि सर्वाण्येव रत्नभूतानि देवीप्रभावादाश्चर्यकारीणि दधिमथीमंदिरपार्श्वे वर्त्तन्त इति ज्ञेयमित्यर्थः॥

अत्रानेकेषामत्युत्कृष्टानां स्तम्भादीनामेकत्र निबन्धनात्समुच्चयालंकारः। तल्लक्षणं "एकत्र यत्र वस्तूनामनेकेषां निबन्धनम्। अत्युत्कृष्टापकृष्टानां, तं वदन्ति समुच्चयम्॥" इति॥

अपि चात्र प्रथमद्वितीयचतुर्थाष्टमैकादशत्रयोदशचतुर्दशानां वर्णानां गुरुत्वात्, अष्टाभिः षड्भिश्च वर्णैर्विश्रामदर्शनाद् वसन्ततिलकं वृत्तम्। तल्लक्षणं तु "आद्यं द्वितीयमपि चेद्गुरु तच्चतुर्थं, यत्राष्टमं च दशमान्त्यमुपान्त्यमन्त्यम्। अष्टाभिरिन्दुवदने! विरतिश्च षड्भिः, कान्ते! वसन्ततिलकं किल तं वदन्ति॥" इति॥ ३३॥

भा० टी०॥ हे लोको! इस लोकमें यह रत्नोंका समुदाय है, जैसे (निराधार होनेसे) आश्चर्यकारी स्तम्भ[1], (पृथ्वीको फाडकर निकलनेसे) आश्चर्यकारिणी देवी (दधिमथी), (पृथ्वीसे एक भागके निकलनेसे) आश्चर्यकारी मन्दिर, (सदाही पानीके समीप होनेसे) आश्चर्यकारी कुण्ड, (ग्रीष्ममें भी पानीके समीप होनेसे) आश्चर्यकारी कूप, और (सदा पवित्र द्रुम होनेसे और फुल्ल रहनेसे) आश्चर्यकारी, सघन वसन्त ऋतुका तिलकरूप गोठ-मांगळोद ग्रामोंका वन ये रत्न हैं। इस लिये इन्होंको सेवन करो॥ ३३॥

**अयि दधिमथि! मिथ्याऽप्रस्तुतात्मप्रशंसाऽ-**
**रचि भुवि पतितैः श्रीमालिनी त्वद्विपक्षैः।**
**पतितमपि रजोऽत्राऽशुद्धिदेभ्यो हि तेभ्यो**
**वरमुपकुरुते यच्छुद्धिकार्यं जनानाम्॥ ३४॥**

सं० टी०॥ अपीति॥ अयिभो दधिमथि! भुवि पृथिव्यां पतितैः, त्वद्विपक्षैः त्वद्विरोधिभिः, अप्रस्तुता न केनापि प्रसङ्गविषयीकृता, श्रीमा-

---

१ देवी और मंदिरके साथ होनेसे देवी (दधिमथी) के मंदिरका ही स्तम्भ समझना।

लिनी शोभाधारिणी, आत्मप्रशंसा स्वस्तुतिः, मिथ्या मृषा, अरचि व्यधायि। न ते प्रशंसार्हा इति भावः। हि यतः, अत्र भुवि पतितमपि रजो धूलिः, अशुद्धिदेभ्यः पतिततयाऽशुद्धिकारिभ्यः, तेभ्यः त्वद्विपक्षेभ्यः, वरं श्रेष्ठं, त्वद्विपक्षापेक्षया रजोऽपि श्रेय इति भावः। यद् (रजः) जनानां लोकानां, शुद्धिकार्यम् उपकुरुते साधयति। हस्तादिशोधने रज उपयुज्यते लोकस्य। अत एव अशोधकापेक्षया शोधकं वरमिति भावः। इत्यर्थः॥

अत्र अप्रस्तुतस्याऽपि रजसः शुद्धिदत्वेन प्रशंसा कृताऽतोऽप्रस्तुतप्रशंसालंकारः। स चाऽस्मिन्वृत्ते 'अप्रस्तुतप्रशंसा' इति पदाकलनाऽसंभवात् 'अप्रस्तुतात्मप्रशंसा' इति पदयोजनया सूचितः। 'अप्रस्तुतात्मनो वस्तुनः प्रशंसा' इत्यर्थकस्यापि तदुपयोगित्वात्। तल्लक्षणं तु "प्रशंसा क्रियते यत्राऽप्रस्तुतस्याऽपि वस्तुनः। अप्रस्तुतप्रशंसा, तामाहुः कृतधियो यथा॥" इति॥

अपि चात्र पूर्वेषां षण्णां वर्णाना दशमत्रयोदशयोश्च लघुत्वात्तदन्येषां च दीर्घत्वादष्टभिः सप्तभिश्च विश्रामामालिनीवृत्तम्। तल्लक्षणं "प्रथममगुरुषट्कं विद्यते यत्र कान्ते!, तदनु च दशमं चेदक्षरं द्वादशान्त्यम्। गिरिभिरथ तुरङ्गैर्यत्र कान्ते! विरामः सुकविजनमनोज्ञा मालिनी सा प्रसिद्धा॥" इति॥३४॥

भा० टी०॥ हे दधिमथी! पृथ्वीमें पड़े हुए आपके वैरियोंने, किसीसे भी नहीं की गई शोभावाली आपकी प्रशंसा झूंठी की। उन वैरियोंसे पृथ्वीमें पडी हुई धूली भी अच्छी क्योंकि वे तों अशुद्धि देते हैं, और वह धूली लोगोंके शुद्धिके लिये काम आती है॥ ३४॥

**त्वमु दधिमथि! स्वौजा एकावलीव लसत्तनु-**
**स्तनुरपि महाभूषा भूषा अपि स्फुटमौक्तिकाः।**
**अथ परिहरन्त्येता मुक्ता मनो हरिणीक्षणे!**
**नहि भगवति! त्वां मूढोऽहं कीर्तयितुं क्षमः॥३५॥**

सं० टी०॥ त्वमिति॥ हे दधिमथि। उ इति पादपूरणे। सुष्ठु शोभनम् ओजः तेजो यस्याः सा त्वं, एकावलीव हारविशेष इव लसत्तनुर्विलसन्मूर्तिः असीति शेषः। तनुः मूर्तिरपि, महत्यो भूषा अलंकारा यत्र सा तथाभूता, भूषणान्यपि, स्फुटानि मौक्तिकानि मुक्ताफलानि यासु तास्तथोक्ताः) अथ पुनः

एता मुक्ता मौक्तिकानि मनो हृदयं, हरन्ति आकर्षन्ति । ( अत एव ) हे हरिणीक्षणे ! मृगीनेत्रे ! भगवति ! देवि !, मूढो मूर्खोऽहं, त्वां प्रकीर्त्तयितुं वर्णयितुं नहि नो, क्षमः समर्थः । अस्मीतिशेषः । इत्यर्थः ॥

अत्र पूर्वपूर्वार्थानां तनुभूषादिरूपाणां वैशिष्ट्ये तत्पराणां महाभूषा-स्फुटमौक्तिकादिरूपाणामर्थानामुत्तरोत्तरं विरचनास्तीत्यत एकावल्यलंकारः । तल्लक्षणं तु " पूर्वपूर्वार्थवैशिष्ट्य-निष्ठानामुत्तरोत्तरम् । अर्थानां या विरचना, बुधैरेकावली मता ॥ " इति ॥

अथ चात्र पूर्वेषां पञ्चानाम् एकादश-त्रयोदश-चतुर्दश-षोडशानां च वर्णानां लघुत्वादितरेषां च गुरुत्वात् षड्भिश्चतुर्भिः सप्तभिश्च विश्रामाद् हरिणीवृत्तम् । तल्लक्षणं " सुमुखि ! लघवः पञ्च प्राच्यास्ततो दशमान्तिमं, तदनु ललितालापे ! वर्णौ यदि त्रिचतुर्दशौ । प्रभवति पुनर्यत्रोपान्त्यः स्फुरत्कनकप्रभे ! यतिरपि रसैर्वेदैरश्वैः स्मृता हरिणीति सा ॥ " इति ॥ ३५ ॥

भा० टी० ॥ हे दधिमथी ! अच्छे तेजवाली आप एकावलीहारके जैसे शोभनेवाली मूर्तिको धारण करती हो । और मूर्ति भी बड़े २ भूषणवाली है, भूषण भी प्रकट मोतीवाले हैं । और ये मोती चित्तको हरण करते हैं; इस लिये हे हरिणीके जैसे चंचलनेत्रवाली ! देवी ! मैं मूर्ख आपका वर्णन नहीं करसक्ता ॥ ३५ ॥

**उमे ! चैत्यं दृष्ट्वा क इदमनुमानं न कुरुते,**
**निराधारः स्तम्भोऽत्र हि शिखरिणीवोच्चशिखरे ।**
**विभातीतश्चैत्यं स्वयमिदमभूद्भूमितलतो**
**न चेदीदृक्षं कः प्रभवति नृलोके रचयितुम् ॥ ३६ ॥**

सं० टी० ॥ उमे इति ॥ हे उमे ! दधिमथि ! कः ( पुरुषः ) चैत्यं मन्दिरं तवेति शेषः । दृष्ट्वा विलोक्य, इदं वक्ष्यमाणम्, अनुमानम् अनुमितिं न कुरुते न करोति ? अपि तु सर्व एव करोतीत्यर्थः । तत्किमित्याह-हि यतः, शिखरिणीव पर्वते इव, उच्चशिखरे उन्नतशिखरे, अत्र मन्दिरे, निराधार आश्रयरहितः, स्तम्भः, विभाति शोभते, इतः अतः कारणात्, इदं चैत्यं मन्दिरं, स्वयम् आत्मना, भूमितलतः पृथ्वीतलात, अभूत् उदपद्यत । दैव्याशक्त्येति भावः । न चेत् अन्यथा स्वयमुत्पत्तिकल्पनाऽभावे, नृलोके मर्त्यलोके ईदृक्षम् अपूर्वस्तम्भा-

दिशोभिन्नमेतादृशं, रचयितुं निर्मातुं, कः ( पुरुषः ), प्रभवति शक्नोति ? न कोऽपीति भावः । इत्यर्थः ॥

अत्र प्रत्यक्षात् निराधारस्तम्भदर्शनरूपाल्लिङ्गाद् भूतकालवर्तिनो लिङ्गिस्थानीयस्य स्वयमुत्पन्नमन्दिरस्य ज्ञानं भवत्यतोऽनुमानाऽलंकारः । तल्लक्षणं तु " प्रत्यक्षाल्लिङ्गतो यत्र, कालत्रितयवर्तिनः । लिङ्गिनो भवति ज्ञान–मनुमानं तदुच्यते ॥" इति॥

किञ्चात्र पूर्वस्य षष्ठवर्णोत्तरवर्त्तिनां पञ्चानाम् उपान्त्यानां च त्रयाणां वर्णानां लघुत्वात्तदन्येषां च गुरुत्वात् षड्भिरेकादशभिश्च विश्रामदर्शनाच्छिखरिणीवृत्तम् । तल्लक्षणं " यदा पूर्वो ह्रस्वः कमलनयने ! पञ्चकपरास्ततो वर्णाः पञ्च प्रकृतिसुकुमाङ्गि ! लघवः । त्रयोऽन्ये चोपान्त्याः सुतनु ! जघनाभोगसुभगे !, रसै रुद्रैर्यस्यां भवति विरतिः सा शिखरिणी ॥ " इति ॥ ३६ ॥

भा० टी० ॥ हे देवी ! आपके इस मन्दिरको देखकर कौन इस अनुमानको नहीं करता ? अर्थात् सब कोई करता है । जैसे–पर्वतके जैसे ऊंचे शिखरवाले इस मंदिरमें आधार रहित थंभ है, इसलिये यह मंदिर खुद पृथ्वीसे उत्पन्न हुआ है, यदि ऐसा न हो तो मर्त्यलोकमें कौन ऐसा मन्दिरको बना सक्ता है । अर्थात् कोई नहीं, इसलिये यह दैवीशक्तिसे पृथ्वीसे खुद ही निकला है ॥ ३६ ॥

**सुमौल्युपरिसंख्यया विरहिता यदीयाः कचा**
**विभान्ति मलिना भृशं न खलु चित्तवृत्तिः परम् ।**
**सुचारुकुटिला समुल्लसति च स्फुटं भ्रूद्वयी**
**न तु प्रकृतिरस्तु सा दधिमथी सुपृथ्वीहिता ॥ ३७॥**

सं० टी० ॥ स्विति ॥ सुष्ठु शोभना मौलिः शिरः तस्योपरि, मस्तकोपरीति भावः । संख्यया गणनया विरहिता हीना असंख्याता इत्यर्थः । कचाः केशा मलिनाः श्यामा भृशम् अत्यर्थं विभान्ति शोभन्ते, परं परन्तु, खलु निश्चयेन चित्तवृत्तिर्मनोवृत्तिः, न । मनोवृत्तिर्मलिना नास्ति, किन्तु, निर्मलैवेति भावः। च पुनः, भ्रूद्वयी भ्रूयुगं, सुचारु सुमनोहरं यथास्यात्तथा स्फुटं प्रकटं, समुल्लसति विराजते । न तु प्रकृतिः स्वभावः, कुटिला वक्रा, समुल्लसति । स्वभावस्तु सरल एवेति तात्पर्यम् । सुपृथ्वी पूज्यतया सुमहती सा दधिमथी ईहिता इष्टा, अस्तु भवतु । ममेति शेषः । इत्यर्थः ॥

अत्र केश—भ्रूयुगयोर्मालिन्यकौटिल्ये चित्तवृत्ति-प्रकृत्योर्निवृत्त्यै प्रतिपादिते अतः परिसंख्यालंकारः। तल्लक्षणं "यत्र साधारणं किञ्चि-देकत्र प्रतिपाद्यते। अन्यत्र तन्निवृत्त्यै सा, परिसंख्योच्यते यथा॥" इति॥

अथ चात्र द्वितीयषष्ठाष्टमद्वादशचतुर्दशपञ्चदशांतिमवर्णानां गुरुत्वात् तदन्येषां च लघुत्वादष्टाभिर्नवभिश्च विश्रामसम्भवात् पृथ्वीवृत्तम्। तल्लक्षणं तु "द्वितीयमलिकुन्तले! गुरु षडष्टमद्वादशं, चतुर्दशमथ प्रिये! गुरुगभीरनाभिह्रदे!। सपञ्चदशमंतिमं तदनु यत्र कान्ते! यति-र्गिरीन्द्रफणभृत्कुलैर्भवति सुभ्रु! पृथ्वीति सा॥" इति॥ ३७॥

भा० टी०॥ जिसके शिरपर असंख्यकेश मलिन हैं, परन्तु चित्तवृत्ति मलिन नहीं है। अर्थात् चित्तवृत्ति तो निर्मल ही है। और भौंह कुटिल हैं, परन्तु स्वभाव कुटिल नहीं है। अर्थात् स्वभाव तो सरल है। वह पूज्या देवी दधिमथी (हमारे) इष्ट हो॥ ३७॥

**एतत्प्रश्नोत्तरमपि सखे! किं न वक्तुं समर्थोऽ-**
**मन्दाक्रान्तारिरुपधरते किं शिवा, कीदृशी च।**
**कीदृक् चाध्यायत इह, ततः क्षीयते किं, किमूढा,**
**कीदृक् चासौ विलसति सदा सिंहराजाधिरूढा॥ ३८॥**

सं० टी०॥ एतदिति॥ हे सखे मित्र! किं त्वम् एतेषां वक्ष्यमाणानां प्रश्नानामुत्तरं प्रतिवचनं वक्तुं न समर्थः? न शक्तोऽसीति भावः। के ते प्रश्ना इत्याह—अमन्दा उत्कृष्टाः आक्रान्तः अधःपतितोऽरिः शत्रुर्यया सा तथोक्ता, शिवा देवी, किम् उपधरते गृह्णाति? च पुनः कीदृशी कथम्भूता सती, उपधरते तदिति योज्यम्। च पुनः, इह जगति, कीदृक् कथम्भूता (सा) आध्यायते ध्यानविषयीक्रियते? ततो ध्यानाच्च किं क्षीयते नश्यति? च असौ एषा देवी किमूढा केन परिणीता? कीदृक् कथंभूता च सदा नित्यं विलसति शोभते? इत्यस्योत्तरमाह—सिंहराजाधिरूढा। सिंहराजो महासिंहस्तमधिरूढाऽध्यासितेत्यर्थः। इदमेवोत्तरं पूर्वप्रश्नोत्तररूपं सूचितम्। तच्च असिं, हरा, अजा, आधिः, उ-ऊढा इति छेद्यम्। तथा हि——आक्रान्तारिर्देवी किं धरतीति प्रश्ने, असिं खड्गं धरतीत्युत्तरम्। कीदृशी सती तद् धरतीति प्रश्ने, हरा

हरतीति हरा तथाभूता सतीत्युत्तरम् । खड्गं हि गृहीत्वा शत्रुं तच्छिरो वा हरत्येव । कीदृक् च साऽऽध्यायते ? इति प्रश्ने, अजा अनुत्पत्तिरूपा, अजस्य शिवस्य स्त्री अजा एतादृशी वा ध्यायत इत्युत्तरम् । ततो ध्यानात्किं क्षीयते ? इति प्रश्ने, आधिर्मानसी व्यथा क्षीयत इत्युत्तरम् । किमूढा केन ऊढा परिणीता ? सा किमूढा इति प्रश्ने, ऊढा उः शिवः तेनोढा परिणीता इत्युत्तरम् । इत्यर्थः ॥

अत्र प्रश्नानां प्राग्गूढत्वेन ततश्च व्यक्तत्वेनोत्तरदर्शनात्प्रश्नोत्तरालङ्कारः । तल्लक्षणं तु "प्रश्ने यत्रोत्तरं व्यक्तं, गूढं वाप्यथवोभयम् । प्रश्नोत्तरम्" इति ॥

अथ चात्र आद्यानां चतुर्णां दशमैकादशत्रयोदशचतुर्दशपोडशसप्तदशानां वर्णानां गुरुत्वात्तदन्येषां च लघुत्वात् चतुर्भिः षड्भिः सप्तभिश्च विश्रामदर्शनाद् मन्दाक्रान्तावृत्तम् । तल्लक्षणं तु "चत्वारः प्राक् सुतनु ! गुरवो द्वौ दशैकादशौ चे-न्मुग्धे ! वर्णौ तदनु कुमुदामोदिनि ! द्वादशान्त्यौ । तद्वच्चान्त्यौ युगरसहयै-र्यत्र कान्ते ! विरामो, मन्दाक्रान्तां प्रवरकवयस्तन्वि ! तां संगिरन्ते ॥" इति ॥ ३८ ॥

भा० टी० ॥ हे मित्र ! क्या इन प्रश्नोंका भी उत्तर नहीं दे सक्ता ? जैसे प्रश्न ( १ ) प्रबला देवी शत्रुको दबाकर क्या ग्रहण करतीहै ? ( २ ) और उस समय वह कैसी होती है ? ( ३ ) और जगत्में कैसी ध्यान की जाती है ? ( ४ ) और उस ध्यानसे क्या क्षीण होता है ? ( ५ ) और वह देवी किससे विवाहिता हुई ? ( ६ ) और सदा वह कैसी शोभित रहती है ? इस अन्तिम ( ६ ) प्रश्नका उत्तर स्पष्ट कह दिया कि 'सिंहराजाधिरूढा' सिंहराज पर बैठी हुई शोभित रहती है ॥ इसही पदमें पूर्वोक्त सब प्रश्नोंके उत्तर गूढ ( छुपे रहे ) हैं । जैसे इस ही पदके टुकड़ोंसे क्रमसे समझो-( १ ) असिं[1] तलवारको । ( २ ) हरा हरण करनेवाली । ( ३ ) अजा नहीं उत्पन्न हुई वा शिवस्त्रीरूप । ( ४ ) आधिः मनकी पीड़ा । ( ५ ) उ-ऊढा महादेवसे विवाहिता । छठे प्रश्नका उत्तर इन पदोंका समुदायरूपं कहही दिया ॥ ३८ ॥

आवासं करणीयमम्ब ! कुरु मे हृन्मन्दिरे सुन्दरे
तत्सक्तं च तमस्तमालमलिनं द्राग्दीपिकावद्धर ।
त्वं चान्द्रीन्द्रभुवीह पादकटकाद्याभूषितायां गुहो-
पेतायां सदयोदयो भज मनः शार्दूल ! विक्रीडितम् ॥ ३९ ॥

---

१ असि शब्दका अकार श्लोकमें इसके पिछाडी आकार होनेसे चला गया है।

सं० टी० ॥ आवासमिति ॥ हे अम्ब ! मातः ! सुन्दरे मनोहरे, मे मम, हृन्मन्दिरे मनोरूपगृहे, करणीयं कर्त्तुं योग्यम्, आवासं निवासं, कुरु विधेहि। च पुनः, तत्र हृन्मन्दिरे, सक्तं वर्त्तमानं, तमाळमलिनं तमालतरुनीलं तमोऽन्धकारं, दीपिकावद् दीपवत्। त्वमित्युन्नेयम्। द्रागद्रुतं, हर नाशय। च पुनः, हे मनःशार्दूल ! चित्तरूपव्याघ्र !, सन् विद्यमानः अयस्य शुभावहविधेः 'अयः शुभावहो विधिः' इत्यमरः। उदयो यस्य स तथाभूतः। सद्भाग्योदय इत्यर्थः। यद्वा दयोदयः दयागुणाविर्भावः तेन सह विद्यमानस्तथाभूतः। त्वं पादकटकादिभिश्चरणाभरणविशेषप्रमुखैः (भूषणैः), अन्यत्र पादाः प्रत्यन्तपर्वताः, कटकः अद्रिनितम्बः, तदादिभिः ( पर्वतोद्देशैः ) आभूषितायाम् अलंकृतायां, गुहः स्कन्दः तेन, गुहाभिश्चोपेतायाम् अन्वितायाम्; इह अस्याम्, अद्रीन्द्रभुवि—अद्रीन्द्रः पर्वतपतिर्हिमाचल इति यावत्। तस्माद् भवतीति अद्रीन्द्रभूर्गिरिजा देवीति यावत्। तस्याम्, अन्यत्र अद्रीन्द्रो महापर्वतः तस्य भूर्भूमिस्तस्यां; विक्रीडितं क्रीडां, भज सेवस्व कुर्विति भावः। यथा हि व्याघ्रः प्रत्यन्तपर्वतनितम्बादियुक्तायां गुहाविशिष्टायां च पर्वतभूम्यां क्रीडां करोति, तथैव हे मनः ! त्वमपि एतादृश्यां देव्यां ( देवीविषये ) क्रीड तन्निरतं भवेत्यर्थः ॥

अत्र तमसस्तमालेन सह, देव्याश्च दीपिकया सह सादृश्यकरणादुपमा १। हृदये गृहारोपाद् मनसि च शार्दूलारोपाद्रूपकम् २। 'अद्रीन्द्रभू' इत्यादि पदानां च द्व्यर्थतया श्लेषः ३। देवीकृतमनोनिवासेन मनःकृततद्विषयक्रीडनेन अतत्परत्वेन 'देव्यां मनोभक्तिर्भवतु' इति विवक्षितस्य प्रतीतेः पर्यायोक्तिः ४। 'दयोदयो' इति द्विरावृत्त्या यमकम् ५। 'मन्दिरे सुन्दरे' इत्यादिरूपतयाऽनुप्रासः ६। 'संकर' इति पदेन संकरालंकारस्य, 'शार्दूलविक्रीडितम्' इति पदेन च तन्नामकवृत्तस्य युक्त्या सूचनेनाश्चर्यकरणाच्चित्रं चालंकारः ७। इत्येतेषां पूर्वोक्तानामलंकाराणां संसर्गात् संकरालंकारः। तल्लक्षणं "तथोक्तानां संसर्गः संकरं विदुः ॥" इति ॥

अपि चात्राद्यानां त्रयाणां षष्ठाष्टमद्वादशत्रयोदशचतुर्दशषोडशसप्तदशान्तिमानां गुरुत्वात्तदन्येषां च लघुत्वाद्, द्वादशभिः सप्तभिश्चाक्षरैर्विश्रामदर्शनाच्छार्दूलविक्रीडितं वृत्तम्। तल्लक्षणं तु "आद्यं यत्र गुरुत्रयं प्रियतमे! षष्ठं ततश्चाष्टमं, सन्त्ये-

कादशतत्त्रयस्तदनु चेदष्टादशाद्यान्तिमाः । मार्तण्डैर्मुनिभिश्च यत्र विरतिः संपूर्णच-न्द्रानने ! तद्वृत्तं प्रवदन्ति काव्यरसिकाः शार्दूलविक्रीडितम् ॥'' इति ॥ ३९ ॥

भा०टी० ॥ हे देवी ! तू, सुन्दर निवास करनेके योग्य मेरे हृदयरूप गृहमें निवास कर । और दीपिकाके जैसी तू, उस हृदय–गृहमें भरे हुए तमालके जैसे मलिन अन्धकारको दूरकर । हे मनरूप व्याघ्र ! अच्छे भाग्यवाला भी, पादकटकादिसे भूषित और गुहान्वित देवीरूप पर्वतकी भूमिमें क्रीडाकर अर्थात् मेरा मन देवीमें लीन रहो ॥ ३९ ॥

अधुना समाप्तेष्वलंकारेषु स्रग्धरावृत्तमुदाजिहीर्षुः कविरचनास्वरूपनिरूपण-रीत्या स्तवमुपसंहरति–

**अर्थोत्कर्षप्रपूर्णा ललितपदगतिः संस्फुरच्चारुवृत्ताऽ–**
**लंकारालंकृता सद्गुणगणगुणिता सद्रसा दोषहीना ।**
**सद्वर्णस्रग्धरा सा कविवररचनेवोल्लसत्साधुरीति–**
**र्नित्यानन्दप्रदात्री दिशतु दधिमथी भक्तिमद्भ्यः प्रमोदम् ॥ ४० ॥**

इति श्री आशुकविपण्डित**नित्यानन्द**शास्त्रि रचितो देवीस्तवः समाप्तः ।

सं० टी० ॥ अर्थेति ॥ अर्थानां प्रयोजनानाम् अभिधेयानां चोत्कर्षेण प्रपूर्णा, ललिता सविलासा पदयोश्चरणयोः गतिर्गमनं यस्याः सा तथाभूता, अन्यत्र ललिता सुमधुरा पदानां सुप्तिङन्तानां गतिर्न्यासो यत्र सा, संस्फुरन्ति शोभमानानि चारूणि मनोहराणि वृत्तानि चरित्राणि यस्याः सा तथोक्ता, अन्यत्र संस्फुरन्ति चारूणि वृत्तानि छन्दांसि यत्र सा तथोक्ता, अलंकारैः कटककुण्डलादिभिः उपमादिभिश्च अलंकृता भूषिता, सन्तः प्रशस्ता ये गुणाः सौन्दर्यादयः प्रसा-दादयश्च तेषां गणः समूहस्तेन गुणिता परिपूर्णा, सति सत्ये रसो रागो यस्याः सा तथोक्ता साधुरसविशिष्टा वा, अन्यत्र सन्तो विद्यमाना रसाः शृङ्गारादयो यत्र सा, दोषाः शरीरदूषणानि तैर्हीना रहिता, अन्यत्र दोषाः श्रुतिकट्वादय-स्तैर्हीना, सद्वर्णा मनोहरशुक्लादिगुणवती या स्रग् माला तस्या धरा धारिका, शोभनमालाधारिणीति भावः । अन्यत्र मनोहराक्षररूपमालाधारिणी, उल्लसन्ती

---

१ देवी–पक्षमें चरणका कटक भूषण आदिसे भूषित । और पर्वतभूमिके पक्षमें पाद–पर्वतका टुकड़ा, कटक नितम्बभाग आदिसे भूषित । २ देवी–पक्षमें स्वामि कार्तिकसे युक्त । और पर्वत–भूमिके पक्षमें गुफाओंसे युक्त ।

शोभमाना साध्वी शोभना रीतिः स्वभावो यस्याः सा तथाभूता, अन्यत्र उत्कृष्टान्त्यः साध्व्यो रीतयः वैदर्भ्यादयो यत्र सा, नित्योऽविनश्वरो य आनन्दो मोक्षस्तं ददात्येवंशीला, अन्यत्राऽपि स एवार्थः । कविरचनाऽपि 'भुक्तिं मुक्तिं च विंदति' इत्यादि चतुर्वर्गफलप्राप्तिप्रमापकप्रमाणैर्मोक्षदायिनी भवत्येव । कवीन्द्राणां महाकवितॄणां रचना भणितिरिव, दधिमथी देवी भक्तिमद्भ्यो भक्तेभ्यः प्रमोदं हर्षं दिशतु ददातु । अत्र 'नित्यानन्द' इति पदेन स्वकीयं नामापि ग्रन्थकारेण सूचितम् । अन्ते च मङ्गलसूचकं प्रमोदपदं प्रदर्शितम् । इत्यर्थः ॥

अत्र वाग्भटालंकारे चत्वारिंशस्याऽलंकारस्याऽभावदर्शनादलंकारस्थाने 'एवंविधा कविरचना भवति' इति कविरचनासरणिः सूचिता ॥

किञ्चात्र आद्यानां चतुर्णां षष्ठ-सप्तम-चतुर्दश-पञ्चदश-सप्तदशा-ऽष्टादश-त्रिंशै-कविंशानां च वर्णानां गुरुत्वात्तदन्येषां च लघुत्वात् सप्तभिः ३ विश्रामदर्शनाच्च स्रग्धरावृत्तम् । तल्लक्षणं तु "चत्वारो यत्र वर्णाः प्रथमलघवः षष्टकः सप्तमोऽपि, द्वौ तद्वत्षोडशाद्यौ मृगमदतिलके ! षोडशान्त्यौ तथाऽन्त्यौ । रम्भास्तम्भोरु ! कान्ते ! मुनिमुनिमुनिभिर्दृश्यते चेद्विरामो, बाले ! वन्द्यैः कवीन्द्रैः सुतनु ! निगदिता स्रग्धरा सा प्रसिद्धा ॥" इति ॥ ४० ॥

इति श्रीयोधपुरस्थेन आशुकविश्री**नित्यानन्द**शास्त्रिणा निर्मिता नित्यानन्दिकानाम्नी स्वकृतदेवीस्तवव्याख्या समाप्ता ।

भा० टी० ॥ बहुत प्रयोजनोंसे परिपूर्ण, अर्थात् व्यर्थ नहीं । तात्पर्य यह है कि भक्तोंके प्रयोजन सिद्धिके लिये बहुत काममें आनेवाली, मनोहर चरणगतिसे शोभित, अच्छे चरित्रवाली, आभूषणोंसे भूषित, अच्छे २ गुणोंसे भरी हुई, सत्यमें रुचि देनेवाली, दोषरहित, अच्छे २ वर्णोंकी माला धारण करनेवाली, अच्छे स्वभाववाली, मोक्ष देनेवाली, अच्छे कवियोंकी कविताके जैसी वह श्रीदधिमथी देवी भक्तोंके लिये हर्षको दो । यह श्लोक कवितापक्षमें भी लगता है । जैसे-अर्थोंके उत्कर्षसे पूर्ण, मधुरपदवाली, अच्छे २ छन्द और अलङ्कारवाली, प्रसादादि गुणवाली, शृङ्गारादि रसयुक्त, श्रुतिकटु आदि दोषरहित, अच्छे अक्षरोंरूप मालावाली, अच्छी २ वैदर्भी आदि रीतिवाली ऐसी कविताभी मोक्षको देती ही है ॥ ४० ॥

इति श्रीग्रन्थकारज्येष्ठसोदरेण पंडितश्री**भगवतीलाल**शर्मणा विद्याभूषणेन विरचिता देवीस्तव-भाषाटीका समाप्ता ॥

श्रीशः शरणम् ।

# परिशिष्टम् ।

दाधीचान्वय आस्त **माधव**कविर्ज्येष्ठोऽस्ति तस्यात्मजो विद्याभूषण इत्ययं **भगवतीलालः** कनिष्ठः पुनः । **नित्यानन्द**कविः कवीश्वरपदाम्भोजन्मभृंगो लघुर्च्छन्दोऽलंकृतिदर्पणाभिधमहं कुर्वे स्म देवीस्तवम् ॥ १ ॥ नित्यानन्दिकयाऽहमेव निजया चायोजयं टीकयाऽकार्षीत्सर्वसुखाय सद्-**भगवतीलालो**ऽत्र हिंदीगिरम् । भो भूमण्डलमण्डिपण्डितवरा ! नत्वा विनीतोऽर्थये ग्रन्थो मेऽनुचरस्य लोचनसुधासम्पातनैः पूयताम् ॥ २ ॥ क ते सरस्वतीक्लृप्त-स्थितयो वै कवीश्वराः[1] ? । क्वाऽहं वाशुकविर्मंद-भाग्यश्चाज्ञानभाजनम् ? ॥ ३ ॥ तथापि शारदानल्प-प्रसादाद्वध्नतः पदम् । पश्यन्तो मे कृतिं संतः सन्तः सन्तोषमाप्नुयुः ॥ ४ ॥ युग्मम् ॥ इत्याशासेतरां नूनं ये पठिष्यन्ति मानवाः । देवीस्तवममुं तेषां श्रियः स्युः परमा नवाः ॥ ५ ॥ अलंक्रियासु कुशला-न्याप्नुवन्त्यखिलासु ते । अलंक्रियासु कुशलाश्छन्दःसु च भवन्त्यतः ॥ ६ ॥ पाठयतां पाठकैरेष कथकैः कथ्यतां तथा । गायकैर्गीयतां सम्यक् श्रूयतां श्रावकैः पुनः ॥ ७ ॥ तिलकम् ॥ वन्दारुवृन्दपरिवन्द्यपदारविंदे ! स्तोत्रेण यद्यपि मथि ! प्रथितप्रथिम्ना । तुष्टाऽसि मे, तदिह तत्पठितुर्जनस्याऽलंकारवृत्तपटुतां च शुभं विधेहि ॥ ८ ॥ आशुकविश्री-**नित्या-नन्दे**नोर्जेऽब्द ऋषिरसाङ्ककु ( १९६७ ) गे । इति सर्वमंगलायाः कृतः स्तवः सर्वमंगलान्यर्प्यात् ॥ ९ ॥ इति शिवम् ॥

इति शुकविआ-**नित्यानन्द**शास्त्रिणा कृतं स्वकृतदेवीस्तव-परिशिष्टं समाप्तम् ॥

**समाप्तोऽयं ग्रन्थः ।**

पुस्तक मिलनेका ठिकाना-

खेमराज श्रीकृष्णदास,

"श्रीवेङ्कटेश्वर" स्टीम् प्रेस-बम्बई.

१ कवीश्वरा वाल्मीकिकालिदासादयः । वा-एक-वीश्वरा इति च्छेदेन हंसाश्च । २ शीघ्रकविपक्षी च । ३ शारदायाः अयं शारदः सरस्वतीसम्बन्धी प्रसादः प्रसन्नता । शरत्सम्बन्धि नैर्मल्यं च ।